ॐ

# श्रीगणेशायनमः

दयौदार्यादिगुणालंकृतश्रीमहारा
जाधिराजरणवीरसिंहानुकम्पया

## कलापञ्चकेंकारकस
## मासतद्धितस्त्रीप्रत्ययपा
## दसहितमेतद्द्वितीयः २

मतिप्रवीणरायहरसुखरायस्योद्य
मेनश्रीनगरान्तर्यन्त्रालयेयन्त्रितम्

संवत् १९३२

Laghu Vritti




ॐ

# श्रीगणेशाय नमः

ॐ अथ नामप्रकरणे ॐ धातुविभक्तिव
र्जमर्थवल्लिङ्गम् अर्थवत्सार्थकं शब्दस्वरू
पं लिङ्गसंज्ञं भवति धातुविभक्तीवर्जयित्वा लिङ्ग
संज्ञायाः प्रयोजनम् लिङ्गान्नकामस्यादिषु
त्रा तस्मात्स्यादिविभक्तयः तस्माल्लिङ्गात्प
रः स्यादयः सप्तविभक्तयो भवंति सि औ जस् इति
प्रथमा अम् औ शस् इति द्वितीया टा भ्याम् भिस्
इति इतितृतीया ङे भ्याम् भ्यस् इति चतुर्थी ङसि
भ्याम् भ्यस् इति पञ्चमी ङस् ओस् आम् इति ष
ष्ठी ङि ओस् सुप् इति सप्तमी आमन्त्रणे प्रथमे
वाष्टमी वृक्षः वृक्षौ वृक्षाः वृक्षम् वृक्षौ वृक्षान्

हलेन हलाभ्याम् हलैः हलाय हलाभ्याम् हलेभ्यः
हलात् हलाभ्यां हलेभ्यः हलस्य हलयोः हला
नाम् हले हलयोः हलेषु आमन्त्रणे हे हल हे ह
लौ हे हलाः पञ्चादौ घुट् स्यादीनामाद्येषु प
ञ्चवचनानि ते घुट्संज्ञा भवन्ति घुट् ५ सिऔजस्
अम् औ घुट्संज्ञायाः प्रयोजनम् घुटि चासम्बु
द्धावित्यादिषु राजा राजानौ राजानः राजानम् राजा
नौ जस्शसौ नपुंसके नपुंसकलिङ्गे ज
स् शस् इत्येतौ प्रत्ययौ घुट्संज्ञौ भवतः घुट् २
जस् शस् घुट्संज्ञायाः प्रयोजनम् घुटि चासम्बु
द्धावित्यादिषु सामानि रूपाणि सामानि पश्य
आमन्त्रिते सिः सम्बुद्धिः आमन्त्रितमाह्वा
नमामन्त्रितेर्थे यः सिप्रत्ययः स सम्बुद्धिसंज्ञो भ
वति सम्बुद्धिसंज्ञायाः प्रयोजनम् सम्बुद्धौ चे
त्यादिषु हे गङ्गे, हे यमुने आगम उदनुबन्धः
स्वरादन्त्यात्परः उदनुबन्धः उकारानुबन्धः
य आगमः सः अन्त्यात्स्वरात्परो भवति अनडुहान्
तृतीयादौ तु परादिः तृतीयादौ विभक्ति
गणे परे उदनुबन्ध उकारानुबन्ध आगमः परस्य
प्रत्ययस्यादिरवयवो भवति सर्वेषाम् इदुदग्निः
इकारान्तः शब्द उकारान्तः शब्दः अग्निसंज्ञो भ
वति अग्निसंज्ञायाः प्रयोजनम् अग्नेरमोकारस्या
दिषु अग्निम् पटुम् अहिम् धेनुम् ईदूत्स्त्री

सस्यनः अकारोलिङ्गान्तोदीर्घं प्राप्नोति शा
सिपरे शसस्य सकारस्य नत्वं भवति वृक्षान् देवान्
अकारेलोपम् अकारोलिङ्गान्तः लोपं
प्राप्नोति विभक्तिसम्बन्धिन्यकारे परे वृक्षम् देव
म् भिसैस्वा अकारान्तात्लिङ्गात्परो भिस्
ऐस् संपद्यते वृक्षैः देवैः सुपिबहुत्वेत्
अकारोलिङ्गान्तः एकारोभवति बहुत्वे उत्पन्ने
सुपिपरे वृक्षेभ्यः देवेषु ओसिच अकारो
लिङ्गान्तः एकारो भवति ओसिपरे वृक्षयोः देवयोः
ङसिरात् अकारान्तात्लिङ्गात्परो ङसि
प्रत्ययः आत्संपद्यते वृक्षात् देवात् ङस्स्य
अकारान्तात् लिङ्गात्परो ङस्प्रत्ययः स्य संपद्यते वृ
क्षस्य देवस्य इनटा अकारान्तात्लिङ्गात्परः
टाप्रत्ययः इनादेशंप्राप्नोति वृक्षेण देवेन ङेर्यः
अकारान्तात्लिङ्गात्परः ङेप्रत्ययः यआदेशंप्रा
प्नोति वृक्षाय देवाय स्मैसर्वनाम्नः अका
रान्तात्सर्वनाम्नः परोङे प्रत्ययः स्मै संपद्यते सर्व
स्मै विश्वस्मै यस्मै तस्मै कस्मै अन्यस्मै अस्मै सर्व
विश्व उभ उभय डतर डतम अन्य अन्यतर त्वत् त्व
नेम सम सिम पूर्व पर अवर दक्षिण उत्तर अपर
अधर स्व अन्तर त्यद् तद् यद् एतद् अदस् इदम्
एक द्वि युष्मद् अस्मद् भवत् किम् एतेसर्वाद
यः ङसिस्मात् अकारान्तात्सर्वनाम्नः प

रेङसिप्रत्ययः स्मात्संपद्यते सर्वस्मात् विश्वस्मात्
यस्मात् तस्मात् कस्मात् अमुष्मात् अस्मात्
**ङिःस्मिन्** अकारान्तात्सर्वनाम्नः परो ङिप्रत्य
यःस्मिन्संपद्यते सर्वस्मिन् विश्वस्मिन् यस्मिन् त
स्मिन् कस्मिन् अमुष्मिन् अस्मिन् **विभाषो**
**नपूर्वादेः** पूर्वादेर्गणात्परयोः ङसिङ्योः स्मा
त्स्मिन्नादेशौ विभाष्येते विकल्पेन कथ्येते पूर्वस्मा
त् वा पूर्वात् पूर्वस्मिन् वा पूर्वे परस्मात् वा परात्
परस्मिन् वा परे **सुडामि सर्वतः** सर्वतः स
र्वस्मा दकारान्ता दाकारान्ताच्च सर्वनाम्नः आमि परे
सुडागमो भवति सर्वेषाम् येषाम् तेषाम् केषाम्
अमीषाम् एषाम् सर्वासाम् यासाम् तासाम् कास
म् अमूषाम् आसाम् **जसः शी** अकारान्ता
त्सर्वनाम्नः परः सर्वो जस् शीत्वं प्राप्नोति सर्वे ये ते के
अमी इमे **अल्पादेर्वा** अल्पादेर्गणात्परो जस्
शीत्वं वा प्राप्नोति अल्पे वा अल्पाः प्रथमे वा प्रथमाः
चरमे वा चरमाः अल्प प्रथम चरम तय अर्ध कति
पय नेम इत्यल्पादिगणः **पूर्वादेश्च** पूर्वादेर्ग
णात्परो जस् वा शीत्वं प्राप्नोति पूर्वे वा पूर्वाः परे वा प
राः **द्वन्द्वस्य च** द्वन्द्वसमासस्यात्सर्वनाम्नः प
रो जस् वा शीत्वं प्राप्नोति कतरे च कतमे च ते
कतरकतमे वा कतरकतमाः दन्नकतर कतमे वा
दन्नकतर कतमाः **नामन्सार्वनामिकम्**

द्वन्द्वसमासस्थात्सर्वनाम्नः परस्य प्रत्ययस्यान्यत्सार्व नामिकं कार्यं न भवति पूर्वे चापरे च तत्पूर्वापरम् तस्मै पूर्वापराय पूर्वापरात् पूर्वापराणाम् पूर्वापरे

**तृतीयासमासे** तृतीयासमासे सति सर्वनाम्नः परस्य प्रत्ययस्य सार्वनामिकं कार्यं न भवति मासेन पूर्वः मासपूर्वः तस्मै मासपूर्वाय मासपूर्वात् मासपूर्वाणाम् मासपूर्वे **बहुव्रीहौ च** बहुव्रीहौ समासे सति सर्वनाम्नः परस्य प्रत्ययस्य सार्वनामिकं कार्यं न भवति प्रियाः सर्वे यस्य स प्रियसर्वस्तस्मै प्रियसर्वाय प्रियसर्वात् प्रियसर्वाणाम् प्रियसर्वे **दिशां वा** दिशां दिग्वाचिनां शब्दानां यो बहुव्रीहिस्तत्रस्थितात्सर्वनाम्नः परस्य प्रत्ययस्य सार्वनामिकं कार्यं वा भवति दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं विदिक्सा दक्षिणपूर्वा तस्यै दक्षिणपूर्वस्यै वा दक्षिणपूर्वायै दक्षिण ॥ पूर्वस्याः दक्षिणपूर्वायाः दक्षिणपूर्वस्याश्च दक्षिणपूर्वायाः दक्षिणपूर्वस्यां वा दक्षिणपूर्वायाम् **प्लुताः सिलोपश्च** प्लुतसंज्ञकात्परः सिप्रत्ययो लोपं प्राप्नोति गङ्गा या सा का **टौसोरे** प्लुतायाश्चान्यस्य एत्वं भवति टाओसोः इत्येतयोः परयोः गङ्गया गङ्गयो उभया उभयोः **सम्बुद्धौ च** आ याश्चान्यस्य एत्वं भवति सम्बुद्धौ परस्याम् हे गङ्गे हे गङ्गे **ह्रस्वोऽम्बार्थानाम्** अम्बार्थायेमातृ

वाचकाः श्रद्धासंज्ञकाः शाखास्तेषां ह्रस्वोभवति सम्बुद्धौ
परस्याम् हे अम्ब हे अक्क हे अल्ल हे श्रद्ध **औरीम्**
श्रद्धायाःपरः औप्रत्ययः ईत्वमाप्नोति शाले अत्र माले
आनय **ङवन्तियैयास्यास्याम्** श्रद्धायाःपराणि
ङवन्तिवचनानि ङे ङसि ङस् ङि इत्येतानियथा संख्यं
यैयास् यास् याम् इत्येतानादेशानापद्यन्ते गङ्गायै ग
ङ्गायाः गङ्गायाः गङ्गायाम् उमायै उमायाः उमायाः
उमायाम् **सर्वनाम्नस्तुसश्चोह्रस्वपूर्वाः**
सहस्तानासकारागमेनयुक्ताः ह्रस्वःपूर्वोयेषांते ह्र
स्वपूर्वाः श्रद्धासंज्ञकात्सर्वनाम्नः परेषांङवतां वचना
नां यै यास् यास् याम् एतेआदेशाः ससवः सकाराग
मयुक्ताः ह्रस्वपूर्वाश्चभवन्ति सर्वस्यै सर्वस्याः सर्व
स्याः सर्वस्याम् यस्यै यस्याः यस्याः यस्याम् तस्यै तस्या
तस्याः तस्याम् कस्यै कस्याः कस्याः कस्याम् अमुष्यै
अमुष्याः अमुष्याः अमुष्याम् अस्यै अस्याः अस्याः अ
स्याम् **द्वितीयातृतीयाभ्यांवा** द्वितीयातृती
याशब्दाभ्यांपरेषां ङवतां वचनानां यै यास् यास्
याम् इत्येतेआदेशाः ससवः सकारागमयुक्ताः ह्रस्व
पूर्वाश्चवाभवंति द्वितीयस्यैवा द्वितीयायै द्वितीय
स्याःवा द्वितीयायाः द्वितीयस्याःवा द्वितीयायाः द्वि
तीयस्यांवा द्वितीयायाम् एवं तृतीयस्यैवा तृती
यायै तृतीयस्याःवा तृतीयायाः तृतीयस्याःवा तृ
तीयायाः तृतीयस्यांवा तृतीयायाम् **नद्यादे**

आमासास्  नदीसंज्ञकाल्लिङ्गात्परेषां ङवतां वचनानामै
पे आस् आस् आम् इत्येते आदेशा भवन्ति नद्यै न
द्याः नद्याः नद्याम् वध्वै वध्वाः वध्वाः वध्वाम्  सं
बुद्धौ ह्रस्वः  नदीसंज्ञकाल्लिङ्गादन्त्यस्य ह्रस्वो भ
वति संबुद्धौ परस्याम् हे नदि हे वधु  अम्शसो
रादिलोपम्  नदीसंज्ञकाल्लिङ्गात्परयोरम्शस्
इत्येतयोः प्रत्यययोरादेरकारो लोपं प्राप्नोति नदी
म् नदीः वधूम् वधूः  ईकारान्तात्सिः ईकारा
न्तान्नदीसंज्ञकाल्लिङ्गात्परः सिप्रत्ययो लोपं प्राप्नोति
नदी मही गौरी  व्यञ्जनाच्च  व्यञ्जनान्ता
ल्लिङ्गात्परः सि प्रत्ययो लोपं प्राप्नोति वाक् विद्युत्
राजा  अग्नेरमोऽकारः  अग्निसंज्ञकाल्लिङ्गा
त्परस्यामः अकारो लोपं प्राप्नोति अग्निम् पटुम् बु
द्धिम् धेनुम्  औकारः पूर्वम्  अग्निसंज्ञका
ल्लिङ्गात्परः औकारः पूर्ववर्णं प्राप्नोति अग्नी पटू बु
द्धी धेनू  शसोऽकारः सश्च नोऽस्त्रियाम्
अग्निसंज्ञकाल्लिङ्गात्परस्य शसः अकारः पूर्ववर्णं
प्राप्नोति शसस्य सकारस्य नत्वं भवति अस्त्रियां स्त्री
विषयं वर्जयित्वा अग्नीन् पटून् अस्त्रियामिति कि
म् बुद्धीः धेनूः  टा ना  अग्निसंज्ञकाल्लिङ्गात्परो
टाप्रत्ययः ना आदेशं प्राप्नोति अस्त्रियां स्त्रीविषयं व
र्जयित्वा अग्निना पटुना अस्त्रियामिति किम् बुद्ध्या

धेन्वा   **अदोमश्च**   अदसाद्यात्परः टाप्रत्ययः
नाख्यादेशंप्राप्नोति अदसश्च अमुश्चादेशोभवति अ
स्त्रियांस्त्री विषयंवर्जयित्वा अमुना अस्त्रियामितिकि
म् अमुया   **इरेदुतोज्जसि**   अग्निसंज्ञकाल्लि
गात् इः एङ्भवति उः ओङ्भवति जसिपरे अग्नयः पट
वः त्रङ्टयः धेनवः   **सम्बुद्धौच**   अग्निसंज्ञ
काल्लिगात् इः एङ्भवति उः ओङ्भवति सम्बुद्धौपर
स्याम् हेअग्ने हेपटो हेत्रङ्टे हेधेनो   **ङेच**   अ
ग्निसंज्ञकाल्लिङ्गात् इः एत्भवति उः ओङ्भवति ङे प्र
त्ययेपरे अग्नये पटवे त्रङ्टये धेनवे   **ङसिङसो
रलोपश्च**   अग्निसंज्ञकाल्लिङ्गात् इः एङ्भवति
उः ओङ्भवति ङसिङसोः परयोः तयोश्च अकारलो
पंप्राप्नोति अग्नेः अग्नेः पटोः पटोः त्रङ्टेः त्रङ्टेः धेनोः
धेनोः   **गोश्च**   गोशब्दात्परयोः ङसि ङसोः
अकारलोपोभवति गोः गोः द्योशब्दादपीष्यते द्योः
द्योः   **ङिरौसपूर्वः**   अग्निसंज्ञकाल्लिङ्गात्परो
ङि प्रत्ययः पूर्वेण वर्णेनसह औकारंप्राप्नोति अग्नौ
पटौ त्रङ्टौ धेनौ   **सखिपत्योर्ङिः**   सखिप
तिशब्दाभ्यां परोङिप्रत्ययः औत्वंप्राप्नोति सख्यौ प
त्यौ   **ङसिङसोरुमः**   सखिपतिशब्दाभ्यां पर
योःङसि ङसो अकारउत्वंप्राप्नोति सख्युः सख्युः
पत्युः पत्युः   **ऋदन्तात्सपूर्वः**   ऋदन्ता
ल्लिङ्गात्परयोः ङसि ङसोः अकारः पूर्वेण वर्णे

नसद्र उत्वं प्राप्नोति पितुः पितुः मातुः मातुः भ्रा
तुः भ्रातुः कर्तुः कर्तुः स्वसुः स्वसुः नुः नुः
ऋतोऽसौसिलोपश्च ऋदन्तस्यालिङ्गस्य सौसि
प्रत्ययेपरे आत्वंभवति सेश्चलोपः पिता माता
भ्राता कर्ता स्वसाना शसिवच्छसि ऋद
न्तलिङ्गमामिवद्भवति शसि सतिकालिङ्गात्परस्य
षासः षासोकारः सश्चनोस्त्रिया मित्यकारस्य
पूर्ववर्णादेशः सकारस्यच अस्त्रियानत्वं यदुक्तं
तदृदन्तादपिभवतीत्यर्थः पितॄन् भ्रातॄन् कर्तॄ
न् नॄन् स्त्रियांसस्यनत्वंनास्ति यथा मातॄः स्व
सॄः अरौ ऋदन्तस्यालिङ्गस्य अर् आदे
शोभवति ङिप्रत्ययेपरे पितरि मातरि भ्रातरि
कर्तरि स्वसरि नरि घुटिच ऋदन्तस्य
लिङ्गस्य अर् भवति घुटिपरे पितरौ पितरः पि
तरम् पितरौ मातरौ मातरः मातरम् मातरौ
भ्रातरौ भ्रातरः भ्रातरं भ्रातरौ नरौ नरः नरम् न
रौ धातोस्तृचश्चस्वसादेः धातोःपरस्य
तृचश्चस्य आर् आदेशोभवति घुटिपरे कर्तारौ
कर्तारः कर्तारम् कर्तारौ वक्तारौ वक्तारः वक्तार
म् वक्तारौ स्वस्रादीनांच स्वस्रादीनां
यः ऋकारस्तस्य आर् भवति घुटिपरे स्वसारौ
स्वसारः स्वसारम् स्वसारौ नप्तारौ नप्तारः नप्तार
म् नप्तारौ स्वसा नप्ताच नेष्टाच त्वष्टाचक्षत्ताहोताच

ञ् हे ताये ताश्च शास्त्रेऽस्मिन् स्वस्वादयः स्मृताः
आच्च सम्बुद्धौ  अदन्तस्य लिङ्गस्य आत्वम्भ
ति असेः सिलोपश्चेत्यनेनात्वं च न भवति पारिशे
ष्यात् टिलोपः एव भवति सम्बुद्धौ परतः हे पितः हे
मातः हे भ्रातः हे कर्तः हे स्वसः हे नः अजन्ताश्चेति
सिलोपः  ह्रस्वनदीश्रद्धाभ्यः सिर्लोपम्
ह्रस्वान्तात् नदीसंज्ञकात् श्रद्धासंज्ञकाच्च लिङ्गात्परः
सम्बुद्धिसिकारः लोपं प्राप्नोति हे हर हे नदि हे वधु
हे गङ्गे  आमि च नुः  ह्रस्वनदीश्रद्धाभ्यः आमि प
रे नुरागमो भवति हरीणाम् श्रीणाम् वायूनाम्
पितॄणाम् नदीनाम् वधूनाम् गङ्गानाम् उमानाम्
त्रेस्त्रयश्च  त्रिशब्दस्यामि परे नुरागमो भव
ति त्रेश्च त्रयादेशः त्रयाणाम् परमत्रयाणाम्
चतुरः  चतुर् शब्दस्यामि परे नुरागमो भवति
चतुर्णाम्  संख्यायाः ष्णान्तायाः  षकार
नकारान्तायाः सं ख्यायाः आमि परे नुरागमो भव
ति षण्णाम् पञ्चानाम् सप्तानाम् दशानाम्  क
तेश्च जस्शसोर्लुक्  षकारनकारान्तायाः सं
ख्यायाः कतिशब्दाच्च परयोः जस्शसोः लुक् भवति
षट् तिष्ठन्ति षट् पश्य पञ्च तिष्ठन्ति पञ्च पश्य सप्त ति
ष्ठन्ति सप्त पश्य दश तिष्ठन्ति दश पश्य कति तिष्ठ
न्ति कति पश्य  नियो ङिराम्  णीञ् प्राप
णे इत्यस्मात् क्विबन्तात्परः ङिप्रत्ययः आम् भवति

नियाम् सेनान्याम् ग्रामण्याम् इति लक्ष्मी
नौनामप्रकरणे लिङ्गपादः प्रथमः १
नसखिष्टादावग्निः सखिशब्दः अग्नि
संज्ञो न भवति टादौ विभक्तिगणे परे सख्या सख्ये
टादाविति किम् सखीन् पतिरसमासे प
तिशब्दः अग्निसंज्ञो न भवति टादौ विभक्तिगणे परे
असमासे समासविषयं वर्जयित्वा पत्या पत्ये टादा
विति किम् पतीन् असमासे इति किम् नरपतिना न
रपतये स्त्रीनदीवत् स्त्रीशब्दो नदीवद्भव
ति स्त्री हे स्त्रि स्त्रीणाम् स्यादामीयुवावा
ति स्यादौ स्त्रीवाचकौ ईदूतौ ययोः स्थाने इ
य् उव् इत्येतावादेशौ दृष्टौ आमि परे नदीवद्वा भव
तः श्रीणाम् वा श्रियाम् भ्रूणाम् वा भ्रुवाम् ङि
त्स्वहूवति स्यादौ स्त्रीवाचकौ यौ ईदूतौ ययोः
स्थाने इय् उव् इत्येतावादेशौ दृष्टौ तौ ङवति वचने परे वा
नदीवद्भवतः तयोश्चकारः तद्यातयोश्च स्याद्ययोः स्त्री
हरिः कृत्वान्तः अग्निसंज्ञश्च श्रियै श्रियाः श्रियाः श्रि
याम् श्रिये श्रियः श्रियः श्रियि भ्रुवै भ्रुवाः भ्रुवाः भ्रु
वाम् भ्रुवे भ्रुवः भ्रुवः भ्रुवि बुद्ध्यै बुद्ध्याः बुद्ध्याः बु
द्ध्याम् बुद्धये बुद्धेः बुद्धेः बुद्धौ धेन्वै धेन्वाः धेन्वाः धे
न्वाम् धेनवे धेनोः धेनोः धेनौ नपुंसकात्स्य
मोर्लोपोऽपि न च तदुक्तम् नपुंसकलिङ्गात्
परयोः स्यमोर्लोपो भवति तयोश्च परयोः यदुक्तं

दध्ने सख्या सख्ये अह्ना अह्नो दादाविति किम् अ
स्थानि स्वरे इति किम् अस्थिभिः **भाषितपुंस्क**
**पुंवद्वा** भाषितपुंस्कं नाम यन्नपुंसकलिङ्गं
टादौ स्वरे परे पुंवद्वा भवति पुंसि यत्कार्यमुक्तं त
द्भाषितपुंस्कस्यापि भवतीत्यर्थः शुचिने वा शुचये
शुचिनः वा शुचेः शुचिनः वा शुचेः शुचिनि वा शुचौ
एवं मृदुने वा मृदवे मृदुनः वा मृदोः मृदुनः वा
मृदोः मृदुनि वा मृदौ एवं ग्रामणिने वा ग्रामण्ये
ग्रामणिनः वा ग्रामण्यः ग्रामणिनः वा ग्रामण्यः ग्रा
मणिनि वा ग्रामण्याम् **दीर्घमामि सनौ**
ह्रस्वान्तलिङ्गं दीर्घमाप्नोति आमि सनुरागमे परे मु
नीनाम् अग्नीनाम् वायूनाम् पितॄणाम् **ना**
**म्नश्चोपधायाः** नान्तस्य लिङ्गस्य उपधा
या दीर्घो भवति सनुरागमे आमि परे पञ्चानाम् स
प्तानाम् दशानाम् **घुटि चासम्बुद्धौ** ना
न्तस्य लिङ्गस्य उपधाया दीर्घो भवति घुटि असम्बुद्धौ
परे राजा राजानौ राजानः राजानम् राजानौ
**सान्तमहतोर्नोपधायाः** सान्तस्य लिङ्ग
स्य महतश्च इत्यस्य च यो नोपधा उपधाभूतो नकारस्त
स्योपधाया दीर्घो भवति घुटि असम्बुद्धौ परे विद्वान्
विद्वांसौ विद्वांसः विद्वांसम् विद्वांसौ महान् महा
न्तौ महान्तः महान्तम् महान्तौ **अपश्च**
अप् शब्दस्य योऽकारस्तस्य दीर्घो भवति घुसम्बुद्धौ

परे आपः स्वाम्भिताकानि **अन्त्वसन्तस्या**
**धातोः सौ** अन्त्वन्तस्य शब्दस्य असन्तस्य च
अधातोः धातुवर्जितस्य अन्त्वसोरकारस्य दीर्घो भव
ति सौ असम्बुद्धौ परे भवान् गोमान् चन्द्रमाः अप्सराः
सुयशाः **इन्हन्पूषार्यम्णां शौ सौ च** इन् ह
न् पूषन् अर्यमन् एषामुपधाया दीर्घो भवति शौ सौ
च परे बहुदण्डीनि बहुवृत्रहाणि बहुपूषाणि बह्वर्य
माणि दण्डी वृत्रहा पूषा अर्यमा **उशनस्पु
रुदंसोऽनेहसः सावनन्तः** उशनस् पुरुदं
सस् अनेहस् एषामन्तः अनादेशं प्राप्नोति असम्बु
द्धौ सौ परे उशना पुरुदंसा अनेहा असम्बुद्धाविति
किम् हे उशनः हे पुरुदंसः हे अनेहः उशनसः शब्द
स्य सम्बुद्धिविषये त्रैरूप्यमिष्यते हे उशनन् हे उशनः हे
उशन माध्यन्दिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रप
दां वरिष्ठः संबोधने चोशनसस्त्रिरूपं सान्तं तथा
नान्तमथाप्यदन्तम् **सख्युश्च** सखिशब्दस्या
न्तः अनादेशं प्राप्नोति सावसम्बुद्धौ परे सखा असम्बु
द्धाविति किम् हे सखे **घुटि ऐ** सखिशब्दस्या
न्तः ऐकारं प्राप्नोति घुटि परे सखायौ सखायः
सखायम् सखायौ **दिव उद्व्यञ्जने** दिव्
शब्दस्यान्तस्य उत्वं भवति व्यञ्जने परे द्युभ्याम् द्युभिः
द्युषु द्युना द्युत्वम् **औः सौ** दिवशब्दस्य अ
न्तस्य औत्वं भवति सौ असिप्रत्यये परे द्यौः हे द्यौः।

वाऽमि दिवशब्दस्यान्त्यस्य वा आत्वं भवति अमिपरे
द्याम् वा दिवम् युजेरसमासे नुड् घुटि युजि
र् योगे इत्यस्याक्विबन्तस्य नुडागमो भवति घुटिपरे अ
समासे समासविषयं वर्जयित्वा युङ् युञ्जौ युञ्जः यु
ञ्जम् युञ्जौ असमासे इति किम् अश्वयुक् अ
भ्यस्तादन्तिरनकारः अभ्यस्तात्परः अन्त् धा
तुः अनकारोऽन्नकारो भवति घुटिपरे ददत् दध
त् बिभ्रत् जक्षत् जाग्रत् वा नपुंसके अभ्य
स्तात्परः अन्त् धातुः अनकारोऽन्नकारो वा भवति
घुटिपरे नपुंसकविषये ददन्ति ददति जक्षति
जक्षन्ति जाग्रति जाग्रन्ति कुलानि तुदभा
दिभ्य ईकारे तुदादिभ्यो धातुभ्यो भादिभ्यश्च
अन्त् धातोरन्नकारो वा भवति ईकारे परे तुदती कु
ले वा तुदन्ती कुले तुदती स्त्री वा तुदन्ती स्त्री भाती कु
ले वा भान्ती कुले भाती स्त्री वा भान्ती स्त्री हनो
हेर्घिरुपधालोपे हनो हिंसागत्योरित्यस्य उ
पधालोपे सति हस्य घत्वं भवति वृत्रघ्नः वृत्रघ्ना वृत्रघ्
ने शत्रुघ्नः शत्रुघ्ना शत्रुघ्ने उपधालोपे इति किम् वृ
त्रहणौ गोरौ घुटि गोशब्दस्यान्त्यस्य औत्वं भ
वति घुटिपरे गौः गावौ गावः ओकारादपीच्छन्ति द्यौः द्या
वौ द्यावः आ अम्शसोः गोशब्दस्यान्त्यस्य आत्वं
भवति अम्शसिपरे गाम् गाः द्याम् द्याः प
थिमथ्यृभुक्षीणामात् पथि मथि ऋभुक्ष

त्ति एषामन्तस्यात्वंभवति सौपरे पन्थाः मन्थाः ऋ
भुक्षाः साविति किम् पथिभिः ॥ अनन्तोघुटि
पन्थ्यादीनामन्तः अनादेशंप्राप्नोति घुटिपरे प
न्थानौ पन्थानः पन्थानम् पन्थानौ मन्थानौ मन्था
नः मन्थानं मन्थानौ ऋभुक्षाणौ ऋभुक्षाणः ऋभु
क्षाणम् ऋभुक्षाणौ घुटीति किम् पथिषु ॥ अ
घुटिस्वरेलोपम् पन्थ्यादीनामन्तः लोपंप्राप्नो
ति अघुटिस्वरेपरे पथः पथा पथे मथः मथा मथे
ऋभुक्षः ऋभुक्षा ऋभुक्षे ॥ व्यञ्जनेचैषांनिः
पन्थ्यादीनांनकारोलोपंप्राप्नोति स्वरव्यञ्जनयोरघु
टोः परयोः पथः पथिभिः पथिषु मथः मथिभिः
मथिषु ॥ अन्तवत्स्याक्रुञ्चेः अन्तवत्स्य लो
पंप्राप्नोति स्वरव्यंजनयोरघुटोः परयोः अक्रुञ्चेः
क्रुञ्चतिकौटिल्याल्पीभावयो रित्यस्मात्तद्वर्जयि
त्वा विदुषः विदुषा विदुषे महतः महता महते वि
द्वद्भिः महद्भिः अघुटोरिति किम् विद्वांसौ महान्तौ
अक्रुञ्चेरिति किम् क्रुञ्चा क्रुञ्चाम् क्रुञ्चु ॥ पुं
सोन्तस्यलोपः पुमन्स् इत्यस्य अन्तस्यलोपो
भवति स्वरव्यंजनयोरघुटोः परयोः पुंसः पुंसा पुं
से पुंभ्यां पुंभिः पुंसु अघुटोरिति किम् पुमांसौ
चतुरोवाशब्दस्योत्वम् चत्वार् शब्दस्य
वाशब्दस्यउत्वंभवति स्वरव्यञ्जनयोरघुटोः पर
योः चतुरः चतुर्भिः चतुर्भ्यः चतुर्णाम् चतुर्षु ॥

**अनडुहश्च** अनड्वाह् शब्दस्य योवा शब्दस्तस्य उ
त्वंभवति स्वरव्यंजनयो रधुटोः परयो अनडुहः अ
नडुहा अनडुहे अनडुद्भ्याम् अनडुत्सु अधुटोरितिकि
म् अनड्वाहौ **सौनुः** अनड्वाह् शब्दस्य सौपरे
नुरागमोभवति अनड्वान् **सम्बुद्धावुभयो।
र्ह्रस्वः** उभयोश्चत्वार् अनडुहोः सम्बुद्धौपरे।
ह्रस्वोभवति हेप्रियचत्वः हे अनड्वन् **अ
दसःपदेमः** अदस् शब्दस्य पदेपदकार्ये कृते
सतिदस्य मत्वंभवति अमुष्मै अमुष्मात् अमुष्मिन्
अमुया अमुयोः **अधुट्स्वरादौसेट्कस्या।
पिवंसेर्वशब्दस्योत्वम्** वंसेः वन्स इत्य
स्य योवशब्दस्तस्य सेट्कस्य इडागमितस्य अपिशब्दात्
इड्रहितस्यापि उत्वंभवति अधुट्स्वरादौप्रत्ययेपरे
पेचुषः पेचुषा पेचुषे विदुषः विदुषा विदुषे अधुट्।
स्वरादावितिकिम् पेचिवांसौ विद्वांसौ **श्व
युवमघोनांच** श्वन् युवन् मघवन् एषांव
शब्दस्य उत्वंभवति अधुट्स्वरादौप्रत्ययेपरे शुनः
शुना शुने यूनः यूना यूने मघोनः मघोना मघो
ने अधुट्स्वरादावितिकिम् श्वानौ युवानौ मघवा
नौ **वाहेर्वाशब्दस्यौत्वम्** वाहेः वहप्रा
पणेइत्यस्य विण्प्रत्ययान्तस्य योवाशब्दस्तस्य औत्वंभ
वति अधुट्स्वरादौ प्रत्ययेपरे प्रष्ठौहः प्रष्ठौहा प्रष्ठौ।
हे तुर्यौहः तुर्यौहा तुर्यौहे अधुट्स्वरादा विति।

किम् पक्ववाहौ नर्यवाहौ  अञ्चेरलोपः पू
र्वस्य च दीर्घः  अलुप्तगतिपूजनयोरित्यस्य किब
न्तस्य अकारलोपो भवति पूर्वस्य चाङ्गस्य दीर्घो भव
ति अघुट्स्वरादौ प्रत्यये परे प्रतीचः प्रतीचा प्रतीचे
मधूचः मधूचा मधूचे  तिर्यङ्तिरश्चः ति
र्यन्चु शब्दः तिरश्चादेशं प्राप्नोति अघुट्स्वरादौ प्रत्य
ये परे तिरश्चः तिरश्चा तिरश्चे अघुट्स्वरादाविति
किम् तिर्यञ्चौ तिरश्चाम्  उदङ्ङुदीचः
उदन्चु इत्यस्य उदीच् आदेशो भवति अघुट्स्वरादौ
प्रत्यये परे उदीचः उदीचा उदीचे अघुट्स्वरादावि
ति किम् उदञ्चौ  पात्पदं समासान्तः पा
च्छब्दः समासान्तः समासस्योत्तरपदभूतः पदादेशं
प्राप्नोति अघुट्स्वरादौ प्रत्यये परे व्याघ्रपदः व्याघ्रपदा
व्याघ्रपदे द्विपदः द्विपदा द्विपदे सुपदः सुपदा सु
पदे  अवमसंयोगादनोऽलोपोऽलुप्तवच्च
पूर्वविधौ  अनः अन्भागस्य अकारलोपो भव
ति अघुट्स्वरादौ प्रत्यये परे अवमसंयोगात् वकारमका
रसंयोगात्परस्य तु न भवति अलुप्तवच्च पूर्वविधौ पूर्व
स्य विधौ कार्ये कर्तव्ये अकारलोपो अलुप्तवद्भवति अ
कारलोपे कृते यत्कार्यं प्राप्तं तन्न भवतीत्यर्थः राज्ञः रा
ज्ञा राज्ञे तवर्गस्य टितिनस्य नः अत्र अकारलोपे कृते जका
रस्य नकारे व्यञ्जने परे चवर्ग दृगादीनां चेति ञत्वं ॥
प्राप्तं न भवति अवमसंयोगादिति किम् यज्वनः क

राज्ञः ईङ्योर्वा अवमसंयोगात्परस्य अनः अकारस्य लोपो वा भवति ईङि इत्येतयोः परयोः साम्नी वा सामनी राज्ञि वा राजनि अवमसंयोगादिति किम् पर्वणी कर्मणी आ धातोरघुट्स्वरे धातोराकारस्य अघुट्स्वरादौ प्रत्यये परे लोपो भवति कीलालपः कीलालपा कीलालपे आ इति किम् हूहुवे ईदूतोरियुवौ स्वरे धातोर्यौ ईदूतौ तयोर्यथासंख्यम् इय् उव् इत्येतावादेशौ भवतः स्वरे परे नियौ नियः लुवौ लुवः धातोरिति किम् लक्ष्म्यौ वध्वौ ईदूतोरिति किम् हूहुवौ स्वर इति किम् नीभ्याम् लूभ्याम् स्त्रियाः स्त्रीशब्दस्य ईकारस्य इय् आदेशो भवति स्वरे परे स्त्रियौ स्त्रियः स्वर इति किम् स्त्रीभिः भ्रूवर्षाभूपुनर्भूः भ्रूशब्दस्य ऊकारस्य उव् आदेशो भवति स्वरे परे अवर्षाभूपुनर्भूः वर्षाभूपुनर्भूशब्दयोरूकारं वर्जयित्वा प्रतिभुवौ प्रतिभुवः अवर्षाभूपुनर्भूरिति किम् वर्षाभ्वौ वर्षाभ्वः पुनर्भ्वौ पुनर्भ्वः अनेकाक्षरयोरित्यवत्वम् अनेकाक्षरयोस्त्वसंयोगाद्यवौ अनेकाक्षरयोरनेकस्वरयोः शब्दयोः यौ ईदूतौ तयोः यव् इत्येतावादेशौ भवतः स्वरे परे असंयोगात्संयोगात्परौ यदि ईदूतौ न स्तः यवौ भवतः प्रध्यौ प्रध्यः ग्रामण्यौ ग्रामण्यः यवल्वौ यवल्वः अनेकाक्षरयोरिति किम् नियौ नियः असंयोगादिति किम् य

वकियौ करभुवौ **भ्रूर्भुवत्** भ्रूशब्दोपा।
उवङ्भवति स्वरेपरे यथाधातोः उवादेशउक्तस्तथा
भ्रूशब्दस्यापिभवतीत्यर्थः भ्रुवौ भ्रुवः स्वरेइतिकिम्
भ्रूभिः **स्त्रीच** स्त्रीशब्दोपादियङ्भवति स्वरेपरे
यथाधातोः ईकारस्य इयादेशउक्तस्तथास्त्रीशब्दस्या
पिभवतीत्यर्थः स्त्रियौ स्त्रियः स्वरेइतिकिम् स्त्रीभिः
**वाम्शसोः** स्त्रीशब्दोपादियङ्वाभवति अ
मिशसिपरे स्त्रियम् वास्त्रीम् स्त्रियः वास्त्रीः अम्शा।
सोरादिर्लोपामित्यकारलोपः **भवतोवादेरुत्वे
सम्बुद्धौ** भवन्तुइत्यस्यशब्दादिरवयवोवत् इ
त्ययंशब्दस्तस्य उत्वंभवति सम्बुद्धौपरस्याम् हेभोः।
हेभवन् **अव्ययसर्वनाम्नः स्वरादन्त्यात्पूर्वो
कः** अव्ययानांसर्वनाम्नांच अन्त्यात्स्वरात्पूर्वोवा
अक प्रत्ययोभवति अज्ञातेकुत्सितेल्पेच तथाह्रस्वानु
कम्पयोः संज्ञायामपिविद्वद्भिः प्रत्ययोयंप्रकीर्तितः
कस्येदमुच्चैः उच्चकैः एवं नीचैः नीचकैः अज्ञातः सर्वः
सर्वकः कुत्सितोयः यकः अल्पःसःसकः ह्रस्वः प
टः पटकः अनुकम्पितोभवान् भवकान् **के
प्रत्ययेस्त्रीकृताकारपरेपूर्वोकारइकारम्**
स्त्रियांकृतः आकारःपरोयस्मात्तस्मिन्ककारेप्र
त्यये प्रत्ययस्थेपरेपूर्वोअकारइकारमापद्यते सर्विका
विश्विका कारिका ह्रारिका अव्ययसर्वनाम्नइत्यक प्र
त्ययः स्त्रियामादाप् अनेनइत्वम् इतिल।

युष्मेनोनामप्रकरणेसमाप्तिपादोद्वितीयः २

ॐ युष्मदस्मदोः पदेपदात्षष्ठीचतु
थींद्वितीयास्ववस्नसौ    युष्मदस्मदोः सब
न्धियत्पदंपदात्परं षष्ठी चतुर्थी द्वितीयास्थवहुत्वे
स्थितं तस्ययथासंख्यंवस् नस् इत्येतावादेशौ भवतः
शिवोवः स्वामी शि वोयुष्माकम् शिवोनः स्वामी
शिवोऽस्माकम् शिवोवोदास्यति शिवोयुष्मभ्यम् ।
शिवोनोदास्यति शिवोऽस्मभ्यम् शिवोवोरक्षति शि
वोयुष्मान् शिवोनोरक्षति शिवोऽस्मान्    वांनौ
द्वित्वे    युष्मदस्मदोः सम्बन्धियत्पदं पदात्परं षष्ठी
चतुर्थी द्वितीया सुद्वित्वे स्थितंतस्य यथासंख्यं वां
नावित्येतावादेशौ भवतः शिवोवांस्वामी शिवोयुव
योः शिवोनौस्वामी शिवआवयोः शिवोवांदास्यति
शिवोयुवाभ्यां शिवोनौदास्यति शिवआवाभ्याम् शि
वोवांरक्षति शिवोयुवाम् शिवोनौरक्षति शिवआ
वाम्    त्वस्मदोरेकत्वेतेमे युष्मदस्मदोरेकत्वे
नियतप्रयोगयोर्युष्मदो तयोर्यत्पदपदात्परं तस्य
यथासंख्यंतेमे इत्येतावादेशौ भवतः षष्ठीचतुर्थ्योः
परयोः शिवस्तेस्वामी शिवस्तव शिवोमेस्वामी शि
वोमम शिवस्तेदास्यति शिवस्तुभ्यम् शिवोमेदा
स्यति शिवोमह्यम्    त्वामौद्वितीयाया
म्    युष्मदस्मदोरेकत्वे नियतप्रयोगयोर्युष्म
दो तयोर्यत्पदंपदात्परं तस्ययथासंख्यं त्वामा इत्येता

6197.

आदेशोभवतः शिवस्त्वारक्षति शिवस्त्वाम् शिवोमार
क्षति शिवोमाम् **न पादादौ** पादस्यश्लोक
पादस्य आदौयत्स्थितंत्वन्मयुष्मदस्मदापदं पदात्परं
तस्यवस्नसादय आदेशानभवन्ति भूयाच्चराचरगुरु
र्युष्माकंश्रेयसेशिवः सएवदेवोभवतादस्माकमभय
प्रदः अस्माकंभुवनेनास्तितवतुल्यः कृपाम्बुधिः त्वयी
ईशाकृतावत्तेममकार्यान्यरागतिः निवेदयामिवित्त
श्रितंनम्येचन्द्रशिखामणौ वचोभवामितन्नायमत्पदे।
श्रमतोपमम् शर्वगौरिनमस्यामिसुवर्यैश्चरणाव
हम् प्रभुस्त्वत्क्रमःस्वामिन्नावयोरस्तुसुस्थिरः म
नःशान्तिपरंत्वाशर्वशरणार्थिनाम् तस्मान्त्वा
नन्यशरणंमर्मेवक्तात्वमर्हसि पादादाविति किम्
देवःक्रमदिनीकान्तश्रीधरः श्रेयसेऽस्तुवः वसन्तुनः।
र्णिकापीठेतिमिरेयोद्दिनाक्षिनः **चादियोगेच**

च वा हा अह एव इत्येतैर्योगे संबन्धे सति
त्वन्मयुष्मदस्मदांपदस्य पदात्परस्यवस् नसादय
आदेशानभवन्ति शिवोयुष्माकंचस्वामी शिवो।
स्माकंचस्वामी ग्रामस्तववास्वम् ग्रामोममवास्व।
म् ग्रामोयुवाभ्यामेवदीयते ग्रामआवाभ्यामेवदी
यते **एषांविभक्तावन्तलोपः** एषां
त्वन्मयुष्मदस्मदांविभक्तौपरतः अन्तलोपोभव।
ति त्वया मया त्वत् मत् युष्मभ्यम् अस्मभ्यम् यु
ष्मत् अस्मत् **युवावौद्विवाचिनोः**

द्विवाचिनोऽर्थप्रतिपादकयोर्युष्मदस्मदोर्विभक्तौ
परतः यथासङ्ख्यम् युव आव इत्येतावादेशौ भवतः यु
वाम् अवाम् युवाभ्याम् आवाभ्याम् युवयोः आव
योः **अमौवाम्** त्वन्मयुष्मदस्मत्परौ अम्
औच आमादेशं प्राप्नुतः त्वाम् माम् युवाम् आवा
म् **आन्शसः** त्वन्मयुष्मदस्मद्भ्यः परा
स्य शसः आन् आदेशो भवति अतित्वान् अतिमान् यु
ष्मान् अस्मान् **त्वमहं सौ सविभक्त्योः**
त्वन्मदोः सविभक्त्योर्विभक्तिसहितयोः सौ परे त्वम्
अहम् इत्येतावादेशौ भवतः त्वम् अहम् **यूयं
वयं जसि** युष्मदस्मदोः सविभक्त्योः जसि परे
यूयं वयम् इत्येतावादेशौ भवतः यूयम् वयम्
**तुभ्यमह्यौ ङयि** त्वन्मदोः सविभक्त्योः ङयि ङे
प्रत्यये परे तुभ्यं मह्यम् इत्येतावादेशौ भवतः तुभ्यम्
मह्यम् **तवममङसि** त्वन्मदोः सविभ
क्त्योः ङसि परे तव मम इत्येतावादेशौ भवतः तव म
म **अत्पञ्चम्यद्वित्वे** त्वन्मयुष्मदस्म
त्परा पञ्चमी अत् सम्पद्यते अद्वित्वे द्विवचनं वर्जयि
त्वा त्वत् मत् युष्मत् अस्मत् अद्वित्वे इति किम् यु
वाभ्याम् आवाभ्याम् **भ्यसभ्यम्** युष्म
दस्मद्भ्यां परो भ्यसप्रत्ययः भ्यम् आदेशो भवतीति युष्म
भ्यम् अस्मभ्यम् **साम आकम्** त्वन्मयु
ष्मदस्मद्भ्यः परः ससागमयुक्त आम् आकमादेशं

आप्नोति अतित्वाकम् अतिमाकम् युष्माकम् अस्मा
कम्  **एत्वमस्यानिनि**  त्वन्मयुष्मदस्मदा
मन्तस्य एत्वंभवति अस्यानिनि अकृतादेशेविभ
क्तिवचनेपरे त्वया मया त्वयि मयि युवयोः आव
योः अस्यानिनीतिकिम् युष्माकम् अस्माकम्

**आत्वंव्यञ्जनादौ**  त्वन्मयुष्मदस्मदाम
न्तस्य आत्वंभवति व्यञ्जनादावकृतादेशेविभक्ति
वचनेपरे अतित्वाभिः अतिमाभिः युष्माभिः अस्मा
भिः अस्यानिनीतिकिम् युष्मभ्यम् अस्मभ्यम्

**रैः**  रैशब्दस्यान्तस्यात्वंभवति व्यञ्जनादौविभक्तौ
परतः राः राभ्याम् राभिः  **अष्टनःसर्वासु**

अष्टन् शब्दस्यान्तस्यात्वंभवति सर्वासुविभ
क्तिषुपरासु अष्टाभिः अष्टाभ्यः अष्टानाम् अष्टासु

**औतश्शस्जस्शसोः**  तस्मादष्टनःकृता
कारात् परयोःजस्शसोः औत्वंभवति अष्टौतिष्ठन्ति
अष्टौपश्य पक्षे अष्ट अष्ट अष्टभिः अष्टभ्यः अष्टभ्य
अष्टानाम् अष्टसु  **अर्वन्नर्वन्तिरसावनञः**
अर्वन्शब्दः अर्वन्तिमादेशमाप्नोति अ
सौसिअनञ्वर्जितश्चेत्तदा अर्वन्तौ अर्वन्तः अर्वन्तम् अ
र्वन्तौ अर्वतः अर्वता अर्वते अर्वद्भ्याम् अर्वत्सु अ
सौइतिकिम् अर्वा अनञ इतिकिम् अनर्वाणौ

**सौचमघवन्मघवतावा**  मघवन् शब्दःमघ
वन्तृ आदेशमाप्नोति वाविकल्पेन सौच अन्यत्र।

येचपरे मघवान् मघवन्तौ मघवन्तः मघवन्तम् म
घवन्तौ मघवतः मघवता मघवते मघवद्भ्याम् म
घवत्सु पक्षे मघवा मघवानौ मघवानः मघवानम्
मघवानौ मघोनः मघोना मघोने मघवभ्याम् म
घवसु **जराजरस्स्वरे वा** जराशब्दस्य जर
स् आदेशो वा प्राप्नोति स्वरे परे जरसौ जरसः जरस
म् जरसौ जरसा जरसे जरसः जरसोः जरसाम् ज
रसि पक्षे जरे जराः जरया जरायै जरायाः जरायाः
जरयोः जराणाम् जरायाम् स्वरे इति किम् जराभिः

**त्रिचतुरोः स्त्रियां तिसृचतसृ विभक्तौ**

त्रिचतुर् इत्येतयोः स्त्रियां वर्तमानयोः यथासङ्ख्यं ।
तिसृचतसृ इत्येतावादेशौ भवतः विभक्तौ परतः तिस्रः
चतस्रः तिसृभिः चतसृभिः स्त्रियामिति किम् त्रयः च
त्वारः त्रीणि चत्वारि **तौ रं स्वरे** तिसृचतसृ इत्येतौ
रत्वमापद्येते स्वरे परे ऋदन्तकार्यस्यापवादः तिस्रः च
तस्रः श्रुटिचेत्यत्र आतः **न नामि दीर्घम्** ति
सृचतसृ इत्येतौ नुडागमयुक्ते आमि परे दीर्घं न प्राप्नुतः
तिसृणाम् चतसृणाम् **नृ वा** नृशब्दः आमि
परे दीर्घं वा प्राप्नोति नृणाम् वा नृणाम् **त्य
दादीनामविभक्तौ** त्यद् तद् यद् एतद् अ
दस् इदम् द्वि एतासामन्त्यस्य अकारादेशो भवति वि
भक्तौ परतः स्यः सः यः एषः द्वौ **किं कः** किं
शब्दस्य क आदेशो भवति विभक्तौ परस्याम् कः कौ क

अमुष्य अमुष्याः अमू अमूभ्याम् यत्रमात्पूर्वो द्विमा
त्रस्तत्र द्विमात्र एतादेशः स्थानेऽन्तरतम इति वचना
त् आकारस्य ऐकारस्य च ऊकारः **एदद्रसो**
**ऽसी** अदसः संबन्धी यो मकारस्तस्मात्परस्य ब
हुत्वविषयस्य एकारस्य ईकारो भवति अमी अ
मीभिः अमीभ्यः अमीषाम् **अपांभेदः**
अपशब्दस्य विभक्तिभकारे परे दत्वं भवति अद्भिः
अद्भ्यः विभक्तिभकारे इतिकिम् अपांभावः अब्भा
ः **विरामव्यञ्जनादिष्वनडुन्नहिव**
**सीनां च** अनडुह् नहीवस् इत्येतेषामन्त्यस्य
दत्वं भवति विरामव्यञ्जनादिषु परेषु अन्यत्र लोपो वि
रामः स्वनडुत् स्वनडुद्भ्याम् स्वनडुत्सु उपानत् उ
पानद्भ्याम् उपानत्सु सुविद्वत् सुविद्वद्भ्याम् सुवि
द्वत्सु विरामव्यञ्जनादिष्विति किम् अनडुहौ
**स्रसिध्वसोश्च** स्रन्सु ध्वन्सु अवस्रंसने इत्येत
योः अन्त्यस्य दत्वं भवति विरामव्यञ्जनादिषु परेषु
उखास्रत् उखास्रद्भ्याम् उखास्रत्सु पर्णध्वत् प
र्णध्वद्भ्याम् पर्णध्वत्सु विरामव्यञ्जनादिष्विति किम्
उखास्रसौ पर्णध्वसौ **हशषछान्ते**
**ज्यादीनां डः** हकारान्तानां शकारान्तानां ष
कारान्तानां छकारान्तानां च धातूनां यजादीनां
यज् सृज् मृज् राज् भ्राज् व्रश्च् भ्रस्ज् परिव्रा
ज् इत्येतेषामन्त्यस्य डत्वं भवति विरामव्यञ्जना

झल्परेषु मधुलिट् मधुलिड्भ्याम् मधुलिट्सु ।
सविट् सविड्भ्याम् सविट्सु त्विट् त्विड्भ्याम् त्वि
ट्सु षाड्षाट् षाड्षाड्भ्याम् षाड्षाट्सु देवेट्
देवेड्भ्याम् देवेट्सु रज्जुसृट् रज्जुसृड्भ्याम् रज्जु
सृट्सु कंसपरिमृट् कंसपरिमृड्भ्याम् कंसपरि
मृट्सु सम्राट् सम्राड्भ्याम् सम्राट्सु विभ्राट्
विभ्राड्भ्याम् विभ्राट्सु घृतघृट् घृतघृड्भ्याम् घृ
तघृट्सु धानाभृट् धानाभृड्भ्याम् धानाभृट्सु
परिव्राट् परिव्राड्भ्याम् परिव्राट्सु विरामव्यञ्ज
नादिष्विति किम् मधुलिहौ देवेजौ         दादेर्धा
तोर्घः         दकारादेर्धातोर्हकारस्य घत्वं भवति ।
विरामव्यञ्जनादिषु परेषु गोधुक् गोधुग्भ्याम् गो
धुक्षु काष्ठधुक् काष्ठधुग्भ्याम् काष्ठधुक्षु इ
त्येवमिति दस्य घः         चवर्गदृगादीनां च
चवर्गान्तस्य धातोः तथा दृगादीनां च दृश स्पृश ऋ
त्विज् दधृष् सृज् दिश् उष्णिह् अञ्च् युञ्ज् क्रुञ्च् इ
त्येतेषामन्त्यस्य कत्वं भवति विरामव्यञ्जनादिषु परे
षु वाक् वाग्भ्याम् वाक्षु अर्धभाक् अर्धभाग्भ्या
म् अर्धभाक्षु दृक् दृग्भ्याम् दृक्षु घृतस्पृक्
घृतस्पृग्भ्याम् घृतस्पृक्षु ऋत्विक् ऋत्विग्भ्याम्
ऋत्विक्षु दधृक् दधृग्भ्याम् दधृक्षु सृक् सृ
ग्भ्याम् सृक्षु दिक् दिग्भ्याम् दिक्षु उष्णिक्
उष्णिग्भ्याम् उष्णिक्षु प्राङ् प्राङ्भ्याम् प्राङ्क्षु ।

सुङ् सुङ्भ्याम् सुङ्क्षु क्रुङ् क्रुङ्भ्याम् क्रुङ्क्षु वि
रामव्यञ्जनादिष्विति किम् वाचौ दिशौ ॥ **मु**
**हादीनां वा** ॥ मुह् द्रुह् स्नुह् स्निह् एषामन्त्य
स्य वा गत्वं भवति विरामव्यञ्जनादिषु परेषु उन्मु
क् उन्मुग्भ्याम् उन्मुक्षु पक्षे हशषढोतिडः उ
न्मुट् उन्मुड्भ्याम् उन्मुट्सु शत्रुध्रुक् शत्रुध्रुग्भ्या
म् शत्रुध्रुक्षु शत्रुध्रुट् शत्रुध्रुड्भ्याम् शत्रुध्रुट्सु
म् उत्स्नुक् उत्स्नुग्भ्याम् उत्स्नुक्षु उत्स्नुट् उ
त्स्नुड्भ्याम् उत्स्नुट्सु प्रस्निक् प्रस्निग्भ्याम् प्र
स्निक्षु प्रस्निट् प्रस्निड्भ्याम् प्रस्निट्सु विराम
व्यञ्जनादिष्विति किम् उन्मुहौ ॥ **हचतुर्था**
**न्तस्य धातोस्तृतीयादेरादिचतुर्थत्वमकृ**
**तवत्** ॥ हकारान्तस्य चतुर्थान्तस्य धातोस्तृ
तीयादेःस्ववर्गान्त्यस्यसतेरादिचतुर्थत्वंभवति तृ
तीयस्यचतुर्थोभवतीत्यर्थः विरामव्यञ्जनादिषुपरे
षु तच्चादिचतुर्थत्वमकृतवद्भवति तेनदहादेर्दस्य
गइतिगत्वंभवति गोधुक् गोधुग्भ्याम् गोधुक्षु
काष्ठधक् काष्ठधग्भ्याम् काष्ठधक्षु निधुट् नि
धुड्भ्याम् निधुट्सु अर्थभुत् अर्थभुद्भ्याम् अर्थ
भुत्सु विपट् विपड्भ्याम् विपट्सु विरामव्यञ्ज
नादिष्विति किम् गोदुहौ ॥ **सजुषाशिषो रः**
सजुष् आशिष् इत्येतयोरन्त्यस्य रेफो भवति
विरामव्यञ्जनादिषु परेषु उत्वस्यवाधः सजूः सा

सजूर्भ्याम् सजूस्त्वम् आशीः आशीर्भ्याम् आशीस्त्वम्
विरामव्यञ्जनादिष्विति किम् सजुषौ आशिषौ
**इरुरोरीरूरौ** धातोरवयवौ यौ इरुरौ तयो
र्यथासंख्यं ईर् ऊर् इत्येतावादेशौ भवतः विराम
व्यञ्जनादिषु परेषु गीः गीर्भ्याम् गीस्त्वम् धूः धू
र्भ्याम् धूस्त्वम् विरामव्यञ्जनादिष्विति किम् ।
गिरौ धुरौ **अहःसः** अहन् शब्दस्यान्तस्य
सत्वं भवति विरामव्यञ्जनादिषु परेषु अहः अहो
भ्याम् अहस्त्वम् विरामव्यञ्जनादिष्विति किम् अ
हानि **संयोगान्तस्य लोपः** लिङ्गस्यः
संयोगस्तस्यान्तलोपो भवति विरामव्यञ्जनादिषु
परेषु विद्वान् महान् पुंभिः **संयोगादेर्धु**
**टः** लिङ्गान्तस्य संयोगस्य य आदिर्धुट् तस्य लो
पो भवति विरामव्यञ्जनादिषु परेषु गोरट् गोर
ड्भ्याम् गोरट्त्वम् सुपतट् सुपतड्भ्याम् सुपतट्त्व
म् विरामव्यञ्जनादिष्विति किम् गोरक्षौ **लि**
**ङ्गान्तनकारस्य** लिङ्गान्ते यो नकारस्तस्य लो
पो भवति विरामव्यञ्जनादिषु परेषु राजा राज
भ्यां राजत्वम् विरामव्यञ्जनादिष्विति किम् राजा
नौ **नसंबुद्धौ** लिङ्गान्तनकारस्य लोपो
न भवति संबुद्धौ परस्याम् हे राजन् नञा निर्दिष्ट
मिति वचनान्नपुंसके वा न लोपः हे सामन् हे सा
म हे दण्डिन् हे दण्डि **नसंयोगान्तलो** ।

**ल्लुप्तवत्** नलोपः संयोगान्तलोपश्च यत्र लुप्त-
वद्भवति नलोपे संयोगान्तलोपे च कृते सति यत्का-
र्यं प्राप्नोति तन्न भवतीत्यर्थः राजभ्याम् राजसु अत्र आ-
कारो दीर्घमिति दीर्घः धुडिवक्षत्वेव इतिपद्धंवचन
भवतः पुमान् गोमान् लिगान्नकारलोपो नभ-
वति **इस्सुसोर्घोषवति रः** इस् उ-
स् इत्येतदन्तयोः शब्दयोः नाम्यादेः इत्यस्य च ।
अन्त्यस्य रत्वं भवति घोषवति परे सर्पिर्भ्याम् धनु-
र्भ्याम् दोर्भ्याम् घोषवतीति किम् सर्पिष्षु धनु-
ष्षु दोष्षु **धुटांतृतीयः** धुटां तृतीयो भ-
वति घोषवति परे मरुद्भ्याम् अग्निमद्भिः ज्ञानभु-
द्भ्याम् **अघोषे प्रथमः** धुटां प्रथमो
भवति अघोषे परे अग्निमत्सु दृषत्सु वीरुत्सु अ-
घोषे इति किम् वीरुधौ **वा विरामे** विरा-
मे वर्त्तमानानां धुटां प्रथमो भवति वा विकल्पेन धु-
टां तृतीय इत्यनस्तृतीयोऽत्र वर्त्तते पक्षे सोऽपि भव-
ति वाक् वाग् अग्निमत् अग्निमद् सामित् समिद्
**रेफसोर्विसर्जनीयः** विरामे लिङ्ग-
स्य ये व्यञ्जनादौ परे रेफसकारयोर्यथादर्शनं
विसर्जनीयो भवति गीः धूः गील्वम् धूल्वम् ।
पयः पयोभ्याम् पयस्त्वम् **विरामव्य-
ञ्जनादावुक्तं नपुंसकात्स्यमोर्लोपेऽपि**
विरामे व्यञ्जनादौ च यत्कार्यमुक्तं नपुंसकात्स्यमोः

समोर्लोपे कृतेऽपि भवति शोभनायोऽयस्मिन्नहनि
तत् सत्तु अत्रव्यञ्जनादौदिवउच्चाञ्जने इतिउत्वस्त्र
त्वं तन्तु पुंसकात्सोर्मेर्लोपेऽपि न च तत्र ङकार्मित्यस्यमो
र्लोपे कृतेऽपि भवति शोभनाः पन्थानो यत्रतत् सुप
थि अत्रव्यञ्जने चैषां निरिति न लोपो भवति

इति लघुवृत्तौ नामसु प्रकरणो गुणस्यादस्तृ।
तीयः ॥ नाव्ययीभावादकारान्ता
द्विभक्तीनाममपञ्चम्याः अकारान्ताद।
व्ययीभावात्परासां विभक्तीनाम् अमादेशो भवति
अपञ्चम्याः पञ्चमीविभक्तिं वर्जयित्वा उपकुम्भं।
तिष्ठति उपकुम्भं पश्य उपकुम्भं देहि उपकुम्भं।
स्वम् अकारान्तादिति किम् अधिपवधाः उपव
धु स्वोऽदत्सत्रिदत्सः अव्ययस्माल्लुगिति सि लोपः।
अपञ्चम्याइतिकिम् उपकुम्भादागतः वा
तृतीयासप्तम्योः अकारान्तादव्ययीभा।
वान्परयोस्तृतीयासप्तम्योः अमादेशो वा भवति
उपकुम्भं कृतम् उपकुम्भेन कृतम् उपकुम्भं स्था
पय उपकुम्भे स्थापय अकारान्तादितिकिम् उपवधु
कृतम् उपवधु स्थापय अव्ययाल्लुक्
अव्ययात् अनकारान्तात् अव्ययीभावात् परासां वि
भक्तीनां लुग्भवति उपवधु तिष्ठति उपवधु पश्य उ
पवधु कृतम् उपवधु देहि उपवधु आगतः उपवधु
स्वम् उपवधु स्थापय सम्यक् कर्तृणां सुकर्तृ।

पद्मान्नयाः अत्र नदिविधिमनतिक्रम्य यथाविधि ।

**अब्बयाञ्च** अब्बयाम्परस्मा विभक्तीनां लुग्भवति च वा ह्य अह एव यामस्मिनेत्वम् न गञ्चमेत्वम् **त्त्रतानां बहुत्वे स्त्रियां। मपत्यप्रत्ययस्य** येषाह्नादेशम्मरक्तांच । वाचकास्तेक्षत्राः क्षत्राणां सम्बन्धिनः अपत्यप्र त्ययस्य बहुत्वे उत्पन्नस्य लुग्भवति अस्त्रियांस्त्री। विषयं वर्जयित्वा अङ्गस्यापत्यानि बहूनि अङ्गाः एवं वङ्गाः कलिङ्गाः मत्स्याः चोरपत्यानि बहूनि र घवः वाणापत्ये इत्यण् तस्यानेनलुक क्षत्राणा मितिकिम् पूरोरपत्यानि बहूनि पौरवाः अण् ण कारोऽत्र हिरादौ स्मणो इत्यर्थः आदिवृद्धिश्च उवर्ण स्यावमार्पयेइति उवर्णस्य ओकारः बहुत्वेइतिकि म् अङ्गस्यापत्यम् आङ्गः अस्त्रियामितिकिम् अङ्ग । स्यापत्यानि बह्वः स्त्रियः आङ्ग्यः अणो येकादिति ईप्र त्ययः ईकारे स्त्रीकृते लोप्यइत्यकारलोपः जस्य अप त्यप्रत्ययस्येतिकिम् पञ्चालानामिमे विषयाः पञ्चा ला तस्येदमित्यण् **गर्गयस्कविदादीनां च** गर्गादीनां यस्कादीनां विदादीनांच सम्बन्धि नः अपत्यप्रत्ययस्य बहुत्वे उत्पन्नस्य लुग्भवति अ स्त्रियांस्त्रीविषयं वर्जयित्वा गर्गस्यापत्यानि बहू। नि गर्गाः एवं वत्साः वजाः सङ्कृतयः आत्रपदा पत्यानि बहूनि आत्रपदः त्यगर्गादेरिति एप ना।

स्यानेनलुक् यस्कस्यापत्यानिबहूनि यस्काः लह्याः
द्रुह्याः विदस्यापत्यानिबहूनि विदाः उर्वाः भरद्वा
जाः वाणापत्ये इत्यण् तस्यानेनलुक् अपत्यप्रत्य
यस्येतिकिम् गर्गस्य इमेशिष्याः गार्गाः यास्काः
वैदाः बहुत्वेइतिकिम् गर्गस्यापत्यं गार्ग्यः यास्का
वैदः अस्त्रियामितिकिम् गर्गस्यापत्यानिबह्व्यः।
स्त्रियः गार्ग्यः यास्क्यः वैद्यः गर्गाद्यञात् एयगो
गादेरितिण्यः एयादितिईप्रत्ययः यस्यापत्यस्यास्य
रपूर्वस्यापिन्न्यायिष्विति यलोपः शिष्टेभ्यःअण् अ
णेयेकादितिईप्रत्ययः गर्गवत्सवज्रसंकृतिशास्त्र।
पात् अजविदभृदित्यादयोगर्गादयः यस्कलह्यद्रु
ह्यअयस्थूणबलन्दइत्यादयोयस्कादयः विदउ
र्वभरद्वाजऋषीण् उपमन्युइत्यादयोविदादयः।

**भृग्वत्र्यङ्गिरस्कुत्सवसिष्ठगोतमेभ्यः।**

भृग्व भृगु अत्रि अङ्गिरस् कुत्सवसिष्ठगो
तम एभ्यःपरस्यापत्यप्रत्ययस्य बहुत्वे उत्पन्नस्य
लुक्भवति अस्त्रियांस्त्रीविषयंवर्जयित्वा भृगोर
पत्यानि बहूनि भृगवः अत्रयः अङ्गिरसः कुत्साः
वसिष्ठाः गोतमाः अस्यानेनलुक् अत्रिशब्दात् ॥
द्व्याच्यादेरेयण् अस्यअनेनलुक् शिष्टेभ्यःवाण
पत्येण् अपत्यप्रत्ययस्येतिकिम् भृगोरिमेशिष्याः
भार्गवाः तस्येदमित्यण् बहुत्वेइतिकिम् भृगो
रपत्यंभार्गवः एवम् आत्रेयः आङ्गिरसः कौत्सः।

वासिष्ठः गौतमः अस्त्रियामिति किम् भृगोरप।
त्यानि वस्त्राः स्त्रियः भार्गव्यः आत्रेय्यः आङ्गिरस्यः
कौत्स्यः वासिष्ठ्यः गौतम्यः अतोयेकादिति ई प्रत्य
यः ईकारे स्त्रीकृते ऽलोप्यः जस्य **यतो भयेति**
**भयमादत्ते वा तदपादानम्** यतः अ
पैति यस्माद्विश्लेषं प्राप्नोति यतो भयं यतश्चाद।
त्ते गृह्णाति तत्कारकं अपादानसंज्ञं भवति अ
पादाने पञ्चमी ग्रामादागच्छति अश्वात्पतितः चौ
रेभ्यो बिभेति अधर्मान्निवर्तते कोष्ठागाराद्धान्यं।
गृह्णाति उपाध्यायाद्विद्यामादत्ते अपादानसंज्ञया
कप्रयोजनम् शेषाः कर्मकरणसंप्रदानापादान-
स्वाम्याद्यधिकरणेषु इत्यत्र वक्ष्यमाणाभिरेव प्र।
योजनम् **ईप्सितेतरत्राणार्थानाम्** २
त्राणार्थानां रक्षाप्रयोजनानां धातूनां प्रयोगे सति य।
दीप्सितमभिप्रेतं तत्कारकमपादानसंज्ञं भवति।
यज्ञाद्यादनीप्सितमपि यवेभ्यो गां रक्षति तिले।
भ्यः काकान्वारयति अनीप्सितं यथा अहिभ्यः उ।
पत्रपति क्षपादन्यं वारयति **यस्मै दित्सा**
**रोचते धारयते वा तत्संप्रदानम्** यस्मै
दित्सा दानमिच्छा यस्मै रोचते यस्मै च स्वर्णं धारया।
ते तत्कारकं संप्रदानसंज्ञं भवति संप्रदाने चतुर्थी
विप्राय गां ददाति वैश्रवणाय बलिमुपहरति देव
दत्ताय रोचते मोदकः यज्ञदत्ताय धान्यं धारयते दि

स्माइतिकिम् राज्ञोदण्डंददाति **यआधारः**
**सदधिकरणम्** यआधारस्तत्कारकं अ
धिकरणसंज्ञंभवति अधिकरणेसप्तमी कटेआस्ते
पर्य्यङ्केशेते जलेमत्स्याः देशाज्जनयः दध्निघृतम्
तिलेषुतैलम् **येनक्रियतेतत्करणम्**
येनक्रियतेसाध्यते तत्कारकंकरणसंज्ञं
भवति करणेतृतीया दात्रेणलुनाति परशुनाछि
नत्ति **यत्क्रियतेतत्कर्म** यत्क्रि
यते क्रिययाविशिष्टंसंपाद्यते तत्कारकंकर्मसंज्ञं
भवति कर्मणिद्वितीयाकटंकरोति ओदनंपचति।
आदित्यंपश्यति **यःकरोतिसकर्ता** यः
करोतिक्रियांनिर्वर्तयति सकर्तृसंज्ञोभवति कर्तरि
तृतीया रुद्रेणत्रिपुरंदग्धम् विष्णुनाबद्धोबलिः क
र्तृसंज्ञयाकिंप्रयोजनम् कर्तरिचेत्यादिषु **का
रयतियःसहेतुश्च** यःकर्तारंकारयतिक्रि
यांप्रेरयति सहेतुसंज्ञोभवति चशब्दात्कर्तृसंज्ञ
श्च कर्तरिप्रथमा कारयतिपाठयति हेतुसंज्ञयाकिं
प्रयोजनम् धातोश्चहेतावित्यादिषु **तेषांप
रस्तूभयप्राप्तौ** तेषामपादानादीनांकारका
णांमध्यात् उभयोर्द्वयोःकारकयोः एकत्रप्राप्तौस
त्यांयत्परं तदेवकारकंभवति वृक्षंत्यजतिखगः त्य
जतिदण्डदाणौ अत्रपरत्वात्कर्मकर्तृकारकेभवतः
**प्रथमाविभक्तिर्लिङ्गार्थवचने** ।

लिङ्गार्थस्य वचने अभिधाने सति लिङ्गात्प्रथमा विभ
क्तिर्भवति वृक्षः कुमारी कुण्डम् द्रोणः आढक
म् **आमन्त्रणे च** आमन्त्रणादिके लि
ङ्गार्थवचने सति प्रथमा विभक्तिर्भवति हे शिव हे
केशव **शेषाः कर्मकरणसंप्रदाना**
**पादानस्वाम्याद्यधिकरणेषु** शेषा
द्वितीयाद्या विभक्तयः कर्मणि करणे संप्रदाने अ
पादाने स्वाम्यादियोगे अधिकरणे च भवन्ति कर्म
णि द्वितीया कटं करोति करणे तृतीया परशुना छि
नत्ति संप्रदाने चतुर्थी विप्राय गां ददाति अपाद
ने पञ्चमी ग्रामादागच्छति अश्वात्पतितः स्वाम्या
दियोगे षष्ठी देवदत्तस्य स्वम् पितुः पुत्रः राज्ञो भा
र्या अधिकरणे सप्तमी कटे आस्ते पर्यङ्के शेते
**पर्यपाङ्योगे पञ्चमी** परि अप आङ् इत्ये
तैर्योगे सति लिङ्गात्पञ्चमी भवति परि स्रुघ्नाद्वृष्टो
देवः अप काम्पकुल्याद्वृष्टो देवः आकलतेन्नाद्वृष्टो देवः
**दिगितरर्त्तेऽन्यैश्च** दिक्शब्दैरितरऋतेऽन्य इत्येतैश्च
योगे सति लिङ्गात्पञ्चमी भवति पूर्वो ग्रामात् द
क्षिणो नगरात् इतरो देवदत्तात् ऋते वि
ष्णोः कुतो मोक्षः अन्यो देवदत्तात् **द्वितीये**
**नेन** एनप्प्रत्ययान्तेन शब्देन योगे सति लि
ङ्गाद् द्वितीया भवति उत्तरेण ग्रामं वसति दक्षिणेन
नगरं वसति पुरस्तादादयश्चेति एनप्रत्ययः क

**र्मप्रवचनीयैश्च** अन्वाद्यपकादश कर्मप्र।
वचनीया ये प्रागुक्तास्तैर्योगे सति लिङ्गाद्द्वितीया भ
वति वृक्षमनु विद्योतते विद्युत् वृक्षं प्रति वृक्षम
भि मां प्रति साधुः **गत्यर्थकर्मणि द्विती
याचतुर्थ्यौ चेष्टायामनध्वनि** गत्यर्था।
नां धातूनां यत्कर्म तस्मिन्कर्मणि अनध्वनि अध्व
वर्जिते द्वितीयाचतुर्थ्यौ भवतः चेष्टायां गम्य।
मानायां सत्यां चेष्टा कायपरिस्पन्दः ग्रामं गच्छति
ग्रामाय गच्छति स्वर्गं व्रजति स्वर्गाय व्रजति तीर्थं या
ति तीर्थाय याति गत्यर्थग्रहणं किम् ओदनं पचति क
र्मणीति किम् अश्वेन याति चेष्टायामिति किम् म
नसा वाराणसीं गच्छति अनध्वनीति किम् अध्वानं
गच्छति **मन्यकर्मणि चानादरे प्राणि
नि** मनज्ञाने इत्यस्य यत्कर्म तस्मिन्कर्मणि अ
प्राणिनि प्राणिवर्जिते द्वितीया चतुर्थ्यौ भवतः अना
दरे गम्यमाने अनादरस्तिरस्कारः तृणमपि त्वा न
मन्ये तृणायापि त्वा न मन्ये बुसमपि त्वा न मन्ये बुसा
यापि त्वा न मन्ये मन्यग्रहणं किम् तृणं त्वां चिन्तयामि अ
नादर इति किम् स्वर्गं त्वां मन्ये अप्राणिनीति किम् न त्वा
काकं मन्ये न त्वा श्वानं मन्ये **नमःस्वस्तिस्वाहास्व
धालंवषड्योगाच्च चतुर्थी** नमस् स्वस्ति स्वाहा स्वधा
अलं वषट् इत्येतैर्योगे सति लिङ्गात् चतुर्थी भवति नमो रु
द्राय स्वस्ति प्रजाभ्यः स्वाहा अग्नये पितृभ्यः स्वधा अलं म

सोऽग्रे हूयमाने गतः गोषु दुह्यमानासु आगतः
**स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्र-
सूतैः षष्ठी च** स्वामिन् ईश्वर अधिपति दाया
द साक्षिन् प्रतिभू प्रसूत इत्येतैर्योगे सति लिङ्गान्त
षष्ठी भवति सप्तमी च धनस्य स्वामी धने स्वामी ध
नस्य ईश्वरः धने ईश्वरः धनस्य अधिपतिः धने अधिप
तिः धनस्य दायादः धने दायादः धनस्य प्रतिभूः धने
प्रतिभूः गवां साक्षी गोषु साक्षी गवां प्रसूतः गोषु
प्रसूतः **निर्धारणे च** जातिगुणक्रिय
यासंज्ञया वा पृथक्कृतिः समुदायादेकदेशस्य निर्धार
णमिति सूत्रम् येषां मध्यात्कस्यचिन्निर्धारणं पृथक्कार
णं तेषां षष्ठी भवति सप्तमी च पुरुषाणां मध्ये क्षत्रि
यः शूरः पुरुषेषु वा गवां कृष्णा गौः संपन्नक्षीरा गोषु
वा अध्वगानां मध्ये धावन्तः शीघ्रगाः अध्वगेषु वा छा
त्राणां मध्ये देवदत्तः पाठकः छात्रेषु वा **ष
ष्ठी हेतुप्रयोगे** हेतुशब्दप्रयोगे सति यो हेतुस्त
स्य षष्ठी भवति हेत्वर्थे इति [illegible] अन्नस्य हे
तोर्वसति विद्याया हेतोर्वसति **स्मृत्यर्थक
र्मणि** स्मृतिरर्थो येषां ते स्मृत्यर्थाः तेषां कर्म
स्मृत्यर्थकर्मण्यस्मिन्कर्मणि षष्ठी भवति पितुः स्मर
ति मातुः ध्यायति प्रियायाश्चिन्तयति **करो
तेः प्रतियत्ने** करोतेः कृञ् करोति इत्यस्य
कर्मण्यस्मिन्कर्मणि षष्ठी भवति प्रतियत्ने गम्यमा

भवति नेनकारेपरे षण्णाम् षण्णवतिः षण्णगरीने इतिकिम् षड्भिः **मनोरनुस्वारोधुटि** मकारनकारयोरनुस्वारोभवति धुटिपरे रंस्यते हंसि धुटीतिकिम् गम्यते हन्यते **वर्गेवर्गान्तः** मकारनकारयोः वर्गान्तोभवति। वर्गेधुटिपरे शान्तःशङ्किता शान्तउपशमे गत्यर्थाकर्मकेतिक्तः पञ्चमोपधेरुपधादीर्घः धुटीतिकिम् वम्राति हन्ति वमु अदने हनहिंसागत्योः वर्तमानातिमि तुःस्वादेःश्नुणः **तवर्गस्य टवर्गयोगेचटवर्गौ** तवर्गस्यचटवर्गाभ्यां योगेसतियथासंख्यंचटवर्गौवादेशौभवतः राज्ञःभ्रज्जति। याञ्चाभ्रस्जपाके टुयाचृयाच्ञायाम् यातिविच्छिप्रच्छीति नट् टवर्गयोगे ईड्ईट्टे षण्णाम् ईडस्तुतौ वर्तमानाते अन्ति अदादेर्लुक अचोर्धघापिनामिति ढत्वम् अट्ट अभि योगे अविश्रनेनटत्वं **नामिकरपरः प्रत्ययविकारागमस्थःसिःषत्वंविसर्जनीयषान्तरोपि** नामिनःककारात् रेफाच्च परः सकारः प्रत्ययस्थोविकारस्थआगमस्थश्चषत्वमापद्यते अविसर्जनीयषान्तरोपि तुकारागमे नविसर्जनीये नषकारेण अव्यवहितोपीत्यर्थः नामिनःअग्निषु वायुषु कातृ वाक्षु त्वक्षु रेफात् गीर्षु धूर्षु इतिप्रत्ययस्थः पयः इति विकारस्थः सर्वेषाम् इत्यागमस्थः अविसर्जनीयषान्तरोपि यथा

सर्पीषि सर्पींषु नाम्निनइतिकिम् असौ **रषृव**
**र्णेभ्योनोणमनन्त्यः स्वरहयवकवर्गपव**
**र्गान्तरोपि** रेफषकारऋवर्णेभ्यः परोनका
रः अनन्त्यः अपदान्तोणकारमापद्यते स्वरहयव
कवर्गपवर्गान्तरोपि स्वरेणहकारेणयकारेण वका
रेण कवर्गेण पवर्गेणचव्यवहितोपीत्यर्थः रेफात्
चतुर्णाम् षात् पुष्णाम् ऋवर्णानाम् न्तृणां वा नृणा
म् स्वरहयवकवर्गपवर्गैः केवलैः समुदितैश्चव्यव
हितोयथा हरेण पुरुषेण महेण आर्येण गर्वेण ।
अर्केण मूर्खेण सर्गेण अर्घेण सर्पेण रेफेण दर्भे
ण धर्मेण रषृवर्णेभ्यइतिकिम् यनम् अनन्त्यइति
किम् नरान् हतान् पितॄन् **स्त्रियामा ।**
**दाप्** आत् अकारान्तात् लिङ्गात् स्त्रियांवर्त्त
मानात् आपप्रत्ययोभवति पकारः स्वार्थः देवदा
त्ता या सा का स्त्रियामितिकिम् कीलालपाः आ
दितिकिम् मतिः **नद्याद्यन्च्वाह्वसन्त**
**सखिनान्तेभ्यई** नद्यादिभ्यःपाठेभ्यः तथा
अन्च् वाह् उ असन्त् अन्त् ऋ सखि नान्त एभ्यः स्त्रि
यांवर्त्तमानेभ्यः ईप्रत्ययोभवति नद्यादिभ्यस्तावत् ।
नदी मही गौरी अन्च् प्राची प्रतीची तिरश्ची उदीची
वाह् पष्ठौही दित्यौही उ पट्वी मृद्वी असन्त् पांशुषी वि
दुषी अन्त् पचन्ती देव्यन्ती ऋ कर्त्री हर्त्री सखि सखी
नान्त दण्डिनी पक्षिनी येभ्यः पाठेभ्यः स्त्रियामीप्रत्ययो

दृषपते तेनदादयः ईकारेस्त्रीकृतेऽलोप्यः
स्त्रियांकृते ईकारेपरे अकारेलोपनीयोभवति दे
वी गौरी मही अनेनअकारलोपः स्त्रीकृतेइतिकिम्।
कृएे स्वरोह्रस्वोनपुंसके नपुंसकवि
षयेयोन्त्यः स्वरस्तस्यह्रस्वोभवति सेनानिकुलम्।
यवलुकुलम् नपुंसकेइतिकिम् ग्रामणीः ना गौः।

इतिलघुवृत्तौनामप्रकरणेकारकपादश्चतुर्थः ४

ओंनाम्नांसमासोयुक्तार्थः

नामसंज्ञालिङ्गस्य विभक्त्यन्तस्योक्तवन्तः यु
ष्टोयत्रप्रयुज्यन्तेनानार्थेषुविभक्तयः तन्नामकवयःप्राहु
र्भेदेवचनलिङ्गयोः नाम्नांसमासःसमसनं पृथक्स्थि
तानामेकीभावोभवति यदिपूर्वपदोत्तरपदानांयु
क्तार्थः परस्परंसम्बद्धार्थोभवति नीलंच उत्पलं नी
लोत्पलम् राज्ञःपुरुषः राजपुरुषः युक्तार्थइतिकि
म् वस्त्रंनीलम् उत्पलंवर्णस्यपश्यति भार्याराज्ञःपु
रुषोदेवदत्तस्य तत्स्थालोप्याविभक्तयः
तत्रसमासार्थेवाक्येयाः स्थिताविभक्तयस्तालो
प्याभवन्ति राज्ञःपुरुषः राजपुरुषः इतिषष्ठीतत्पुरु
षः शङ्कुलयाखण्डः शङ्कुलाखण्डः यूपायदारु यू
पदारु वृकेभ्योभयंवृकभयम् लोप्याइत्यदेशत्वय
निर्देशादन्यस्यापिलोपादेस्य यथादर्शनंलोपः दे
वस्यस्वमिवस्वमस्यसः देवस्वः हृतपूर्णोघटः।
हृतघटः अविद्यमानंपापंयस्यसः अपापः अत्रस्य।

त्वपूर्णो विद्यमानानां शब्दानां लोपः **प्रकृतिश्च स्वरान्तस्य** स्वरान्तस्य शब्दस्य समासे विभक्तिलोपे च कृते प्रकृतिर्यथास्वरूपं भवति प्रत्ययलोपे प्रत्ययलक्षणमिति वचनाद्यत्प्राप्तं तन्न भवति पितरि ऋणः पितृऋणः अत्र अर्तौ विति अग्राप्तः सर्वो येनाप्तः सार्वविद्याप्तः अत्र वृद्धिर्वा इति एवं प्राप्तम् **व्यञ्जनान्तस्य यत्सुभोः** व्यञ्जनान्तस्य शब्दस्य सु प्रत्यये भकारे च परे यत्कार्यं प्राप्तं तत्समासे विभक्तिलोपे च कृते भवति विड्घः अर्थः विड्दर्थः अत्र नलोपो दत्वं च भवति राज्ञः अर्थः राजार्थः अत्र नलोपः दिवं गतः द्युगतः अत्र उत्वम् । घस्रामाश्रयः घउाश्रयः अत्र उत्वम् **पदे तुल्याधिकरणे विज्ञेयः कर्मधारयः** यत्र समासे तुल्याधिकरणे एकद्रव्यविषये उत्तरपदे परे पूर्वपदं समस्यते स समासः कर्मधारयसंज्ञो विज्ञातव्यः ब्राह्मणी चासौ दारिका ब्राह्मणदारिका कर्मधारयसंज्ञे तु पुंवद्भावो विधीयते इति पूर्वपदस्य पुंवद्भावः तुल्याधिकरणे इति किम् कल्याण्या दुहिता कल्याणीदुहिता कर्मधारयसंज्ञया अप्रयोजनम् कर्मधारयसंज्ञे तु पुंवद्भावो विधीयते इत्यत्र ।

**संख्यापूर्वो द्विगुरिति ज्ञेयः** संख्यापूर्वः समासः द्विगुसंज्ञो ज्ञेयः ज्ञातव्यः तद्धितानां ये अर्थास्तेषु सत्सु उत्तरपदे परे समाहारे चाभिधेये ।

येद्विगुरिष्यते तद्धितार्थेऽत्रतावत् पञ्चसुकपालेषु सं
स्कृतः पुरोडाशः पञ्चकपालः अत्र संस्कृतेऽर्थे एव
मादेरणिष्यते इत्यण् तस्य द्विगोर्लुगनपत्ये इति ।
तन्त्रान्तराल्लुक उत्तरपदे पञ्चगावोधनं यस्य सः प
ञ्चगवधनः अत्र धनशब्दे उत्तरपदे पञ्चगवइति ।
द्विगुः समासान्तगतेति गोशब्दादकारः समासान्त
पञ्चानां गवां समाहारः पञ्चगवम् पूर्ववदकारः ।
समासान्तः पञ्चानां नदीनां समाहारः पञ्चनदम्
संख्यायानदीगोदावर्योरिति नदीशब्दादकारः समा
सान्तः इवर्णावर्णयोरिति ईकारलोपः द्विगुसंज्ञ ।
याश्चप्रयोजनम् द्विगोरित्यत्र **तत्पुरुषा ।
वुभौ** उभौ कर्मधारयः द्विगुश्च तत्पुरुषौ भव
तः कुत्सितश्चासावश्वः कदश्वः एवं कदर्यः कर्मधा
रयस्य तत्पुरुषत्वात् कोः कत् इति कत् आदेशः पञ्चा
नां गवां समाहारः पञ्चगवम् द्विगुसमासस्य त
त्पुरुषत्वात् गोरतद्धितलुकीति टच् समासान्तः स
खिराजशब्दाभ्यां तत्पुरुष एव स्मर्यते पञ्चानां राज्ञां
समाहारः पञ्चराजी द्विगोरिति ईप्रत्ययः ईकारे ।
सीकृतेऽलोप्य इत्यकारलोपः **विभक्तयो
द्वितीयाद्यानाम्नापरपदेनतु समस्य ।
तेसमासोद्विजैस्तत्पुरुषःसच** यत्र
समासे द्वितीयाद्याविभक्तयो द्वितीयादिविभक्त्यन्ता
निपदानि परपदेन नाम्ना समस्यन्ते स समासः ।

स्वरूपसंज्ञोज्ञेयः ज्ञानाढ्यः धर्माश्रितः धर्माश्रितः शंकु
लयाखण्डः शङ्कुलाखण्डः यूपायदारु यूपदारु वृ
केभ्योभयं वृकभयम् राज्ञःपुरुषः राजपुरुषः अ
क्षेषुशौण्डः अक्षशौण्डः परपदेनेतिकिम् गतो।
ग्रामम् तत्पुरुषसंज्ञयाकःप्रयोजनम् तस्यतत्पुरु
षेलोपइत्यत्र **स्यातांयदिपदेद्वेतुयदि**
**वास्युर्बहून्यपि तान्यन्यस्यपदस्यार्थेबहु**
**व्रीहिः** यत्रसमासेद्वेपदेस्यातां यदिवाबहू
निपदानिस्युः तानिपदानि अन्यस्यपदस्यार्थेवाच्ये।
सतिसमस्यन्ते ससमासोबहुव्रीहिसंज्ञोभवति द
ण्डैश्च दण्डैश्चयद्युद्धं तद्दण्डादण्डि इच्कर्मव्यतिहारे इ
तिइच् समासान्तः आकारोऽन्तः कार्यइतिकार्यग्र
हणादाकारः इवर्णावर्णलोपः अव्ययमेतत् अव्य
यात्सेर्निसिलोपः आरूढोवानरोयंवृक्षं आरूढ
वानरोवृक्षः सहपुत्रेणवर्ततेयःसः सपुत्रः सहभा
र्ययावर्ततेयः सः सभार्यः ङिनौसहपूर्वेइतिज्ञापका
त्सहशब्दस्यसभावः गोस्त्रियोरुपसर्जनस्येति उत्तर
पदस्यह्रस्वः कृतउपकारोयेनसकृतोपकारः रोचि
तोमोदकोयस्मैसरोचितमोदकः उद्धृतओदनोयस्याः
सा उद्धृतौदनास्थाली चित्रागावोयस्यसचित्रगुः वे
वर्णाभिन्नवर्णाइतिचित्राशब्दस्यह्रस्वः शुद्धंजलंय
स्याःसाशुद्धजलानदी आसन्नादशानांयेतेआसन्नद
शाःएवं आसन्नविंशाः आसन्नविंशाः बहुव्रीहौसंख्येयेडज्वा।

ऋगणादितिरच् समासान्तः अत्र बन्येन्यस्वरादेर्लोपः
बहूनि पदानि यथा मत्ता बहवो मातङ्गा यत्र तत् म
त्तबहुमातङ्गं वनम् बहुव्रीहिसंज्ञायाः प्रयोजनम्
बहुव्रीहौ चेन्यत्र **विदिक्कथा** विदिग्यत्र
अन्यपदार्थो स समासो बहुव्रीहिसंज्ञो भवति दक्षि
णस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं विदिक्सा दक्षिण
पूर्वा एवं उत्तरपूर्वा पूर्वोत्तरा पूर्वदक्षिणा दक्षिण
पश्चिमा इत्यादयाउदाहार्याः सर्वनाम्नो वृत्तिमात्रे इति
पूर्वपदानां पुंवद्भावः **द्वन्द्वः समुच्चयो ना
म्नोर्बहूनां वापि यो भवेत्** एकस्यां क्रिया
यामनेककर्मादिसंबन्धः समुच्चयः यत्र समासे द्व
योर्नाम्नोः बहूनां वा नाम्नां समुच्चयः स समासो द्वन्द्व
संज्ञो भवति स च द्वयोरर्थयोर्विद्यमाने समाहारे इतरेत
रयोगे च यत्र समूहप्राधान्यं स समाहारः यत्र पृथ
क्स्थितानां पदार्थानां प्राधान्यं स इतरेतरयोगः पदा
र्थानां नित्यसंयोगो वा तत्र प्रायशः प्राण्यङ्गानां सेना
ङ्गानां तूर्याङ्गानां येषां मास्थिवद्भिः शरीरं ह्रस्वपतनेषां
तद्जन्तूनां च समूहेनैवास्थितिर्दर्शनात्समाहार एव
द्वन्द्वो भवति पाणी च पादौ च तत्पाणिपादम् शिरोग्री
वम् अश्वैश्च इति प्राण्यङ्गानाम् तूर्याङ्गानां यथा मार्द
ङ्गिकपाणविकम् वांशिकवैणविकम् सेनाङ्गानां य
था हस्त्यश्वम् रथिकाश्वारोहम् तद्जन्तूनां यथा यू
कालिक्षम् दंशमशकम् अप्राणिनामपि फलादीनां प्राय

णः समूहत्वात्समाहार एव बदरामलकम्
आराधाश्वं स्वरोष्ट्रस्योनश्रसके इति ह्रस्वः प्राणि
नां तु पृथग्भूतत्वादितरेतरयोग एव ब्राह्मणक्ष
त्रियौ नित्यवैरिणां तु परस्परविरोधात्समूहत्वा
त्वाभावेपि समाहार एव येषां च विरोधः शाश्व
तिक इति तन्त्रान्तरात् अहिनकुलम् मूषिकमा
र्जारम् बिडालोन्दुरम् एवमन्यत्रापि लक्ष्यानुसारे
ण समाहार इतरेतरयोगौ द्वन्द्वसमासे ज्ञेयः

**अल्पस्वरतरं तत्र पूर्वम्** तत्र द्व
न्द्वे यदल्पस्वरतरं तत्पूर्वमेव प्रयोज्यम् यथा ख
दिरौ प्लक्षन्यग्रोधौ नखुलकि एवं उलूखलमु
सले इत्यादौ पूर्वनिपातः अर्चितत्वात् तत्र ब्र
ह्मणक्षत्रस्य पूर्वनिपातः कुशकाशम् अग्नि
संज्ञकस्य पूर्वनिपातः द्वन्द्वे घि इति तन्त्रान्तरात् अ
ग्नीषोमौ ईदग्नेः सोमवरुणयोरिति तन्त्रान्तरात् ई
त्वम् अग्नेः स्तुत्सोमसोमा इति षत्वम् दे

**वार्चिते द्वयोः** द्वयोः नाम्नोः द्वन्द्वे यदर्चि
तं पूजितं तत्पूर्वमेव प्रयोज्यम् वासुदेवार्जुनौ मा
तापितरौ पिताश्वशुरौ आनङ्ऋतो द्वन्द्वे इति पूर्वपदान्त
ऋकारस्यानत्वम् ब्राह्मणक्षत्रियौ सूर्याचन्द्रमसौ
देवताद्वन्द्वे चेति पूर्वपदस्यानत्वम् जायापती भार्या
पती अत्रापि पतिर्जायां प्रविशति गर्भो भूत्वेह जा
यते जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ।

रितिस्मरणाज्ज्ञायायामर्चितत्वम् वषाद्रातक्वचिद
नर्चितस्यापिपूर्वनिपातः चन्द्रार्कौशुक्लकृष्णद्वस्यती
कालकाम्यौ काकमयूरौ शत्रुमित्रे इत्यादि द्वयोरि
तिकिम् सर्वस्वरान्त्यन्तवानिसङ्ग्रस्तमसङ्कर्ष
णावासुदेवाइति पूर्ववाच्यंभवेद्यस्यसोव्ययीभाव
इष्यते यस्यसमासस्यपूर्वंपूर्वपदार्थोवाच्यंप्रधा।
नंभवेत् ससमासः अव्ययीभावसंज्ञइष्यते समी
पंकुम्भस्य उपकुम्भम् समृद्धिःकर्तृणांसकर्तृ।
अभावःपापानाम् अपापम् अत्ययःशीतानाम्।
अतिशीतम् पश्चाद्रथस्य अनुरथम् विधिमन।
तिक्रम्ययथाविधि स्थानेस्थानेयथास्थानम् यो
यःस्वयथास्वम् येनयेनप्रकारेणयथायथम् इ
तिनिपातनात् आकारस्यह्रस्वः अव्ययीभावसंज्ञा।
याःप्रयोजनम् अव्ययीभावादकारान्तान्नाद्विभक्ती
नामम्पञ्चम्याइत्यादिषु **सनपुंसकलि**
**ङ्गःस्यात्** सोव्ययीभावसमासोनपुंसकलि
ङ्गोभवति उक्तान्युदाहरणानि उपकुम्भमित्यादी
नि **द्वन्द्वैकत्वम्** द्वन्द्वस्ययदेकत्वंस।
माहारस्तत् नपुंसकलिङ्गंभवति पाणिपादम् ब
दरामलकम् **नद्यादिगोः** द्विगोःस
मासस्यनपुंसकत्वंभवति नद्यादिनैवप्रकारेणये
नैवद्वन्द्वस्येत्यर्थः पञ्चानांनदीनांसमाहारः पञ्च
नदम् दशानांगवांसमाहारः दशगवम् सङ्ख्या।

यामद्रीगोदावर्योः गोरतद्धितलुकीतिच आकारः ।
समासान्तः समाहारादन्यत्रयोर्द्विगुस्तस्य न भवति
पञ्चसु कपालेषु संस्कृतः पुरोडाशः पञ्चकपालः

**पुंवद्भाषितपुंस्कादनूङ् पूरण्यादिषु स्त्रियां तुल्याधिकरणे**

भाषितपुंस्का या स्त्रीविशेषणं स्त्रीलिङ्गं अनूङ् ऊङ्प्रत्ययरहितं । सा स्त्रीलिङ्गं पूरणादिवर्जिते तुल्याधिकरणे एकार्थविषये उत्तरपदे परे पुंवद्भवति पुंसि यद्रूपं तदापद्यते इत्यर्थः दर्शनीया भार्या यस्य स दर्शनीयभार्यः उत्तरपदस्य गोस्त्रियोरुपसर्जनेति ह्रस्वः कल्याणी भार्या यस्य स कल्याणभार्यः एवं सुरूपभार्यः । भाषितपुंस्केति किम् खट्वा भार्या यस्य स खट्वाभार्यः स्त्रीलिङ्गनिर्देशः किम् अतिविकुलं गतिर्यस्य सः अतिविगतिः अतिजलं गतिर्यस्य सः अतिजगतिः पुंवद्भावेन ह्रस्वनिवृत्तिः स्यात् अनूङ् इति किम् ब्रह्मबन्धूः भार्या यस्य स ब्रह्मबन्धूभार्यः ब्रह्मबन्धुशब्दात् ऊङ् न इत्यनूङ् ऊकार इत्यर्थः अपूरण्यादिष्विति । किम् कल्याणी पञ्चमी यासां ताः कल्याणीपञ्चमा रात्रयः अप्पूरणीप्रमाण्योरित्यप् समासान्तः इव । र्णावर्णलोपः स्त्रियामिति किम् कल्याणीप्रधानं यासां ताः कल्याणीप्रधानाः तुल्याधिकरणे इति किम् । कल्याण्या उदिता कल्याणीउदिता

**संज्ञापूरणीकोपधात्तु न**

संज्ञाभूतात्पूरणाच्च ।

ण्यान्ताककारोपधा च भाषितपुंस्कात्पुंवन्न भवति ।
स्त्रीलिङ्गे तुल्याधिकरणे पदे पूर्वेण प्राप्तिः दत्ता भार्या
यस्य स दत्ताभार्यः पाचिकाभार्यः पञ्चमीभार्यः ना
गरिकाभार्यः माथुरिकाभार्यः नर्त्तकीभार्यः **क**
**र्मधारयसंज्ञे तु पुंवद्भावो विधीयते** सं
ज्ञापूरणीकोपधानां कर्मधारयसंज्ञे समासे तुल्या
धिकरणे स्त्रीलिङ्गे पूरणादिवर्जिते उत्तरपदे परे पुं
वद्भावो विधीयते पूर्वेण निषेधः प्राप्तः दत्ता चासौ वृ
न्दारिका दत्तवृन्दारिका पञ्चमवृन्दारिका **आ**
**कारो महतः कार्यस्तुल्याधिकरणे पदे**
महत इत्यस्य आकारः कार्यः तुल्याधिकरणे पदे परे
महांश्चासौ देवः महादेवः महान् कायो यस्य स महा
कायः तुल्याधिकरणे इति किम् महतः पुत्रो महत्पुत्रः
कार्यग्रहणादन्यत्रापि पूर्वपदस्यात्वं भवति द्वौ च द
शेश्वयुक्तं तद्ग्रहणादपि पितामहो एकादश
**नञस्तत्पुरुषे लोपः** नञः पदस्य तत्पुरुषे
प्रसिद्धस्य उत्तरपदे परे नकारस्य लोपो भवति न ब्रा
ह्मणः अब्राह्मणः न वृषलः अवृषलः पदस्येति कि
म् वामनञः **स्वरेऽक्षरविपर्ययः** अ
क्षरयोर्विपर्ययः अक्षरविपर्ययः नञः पदस्य अक्ष
रविपर्ययो भवति स्वरे परे न अश्वः अनश्वः न उष्ट्रः ।
अनुष्ट्रः **कोः कत्** कुशब्दस्य तत्पुरुषे
प्रसिद्धस्य कत् आदेशो भवति स्वरे परे कुत्सितोश्वः ।

सावश्वः कदश्वः नत्वरुषे इतिकिम् कुत्सितुरुष्ट्रा।
उष्ट्रोयस्यसकूष्ट्राढः **कान्वीषदर्थे**
ईषदर्थेवर्त्तमानस्यकुशब्दस्यकाऽऽदेशोभवति ई
षन्मधुरम् कामधुरम् एवंकालवणं कामवम् ई
षदर्थेइतिकिम् कुत्सितोदेशः कुदेशः **अ**
**क्षे** अक्षशब्देउत्तरपदेपरेकुशब्दस्यकाऽऽदे।
शोभवति अनीषदर्थेवचनम् कुत्सितःअक्षःका
क्षः **पुरुषेतुविभाषया** कुशब्दस्यपुरु
षशब्देपरेकाऽऽदेशोभवति विभाषयाविकल्पेन कु
त्सितःपुरुषःकापुरुषःकुपुरुषोवा **याकारौस्त्री**।
**कृतौह्रस्वौक्वचित्** स्त्रियांकृतौस्त्रीकृतौ
ईकारआकारौ उत्तरपदेपरेह्रस्वौभवतःक्वचित्
नसर्वत्र रेवनिमित्तः रोहिणीदत्तः इष्टकाइषीका
मालापदानांयथाक्रमंचिततूलभारिषु उत्तरपा
देषुपरेषु अन्त्यस्यह्रस्वोभवति इष्टकेषीकामाला
नांचिततूलभारिष्वितितन्त्रान्तरात् इष्टकाचि
तम् इष्टकचितम् इषीकायास्तूलंइषीकतूलम्
मालांबिभर्तीति मालभारिणीकन्या क्वचिदिति
वचनात् इहनभवति लक्ष्मीनरानन्दीकृत्या
**ह्रस्वस्यदीर्घता** ह्रस्वस्यक्वचिद्दीर्घताभव।
ति दीर्घोभवतीत्यर्थः अष्टसुकपालेषुसंस्कृतः पु
रोडाशः अष्टाकपालः दाङ्गुलौकर्णौयस्यसदाङ्गु
लाकर्णः एवंद्विगुणाकर्णः क्वचिदितिवचनादि।

त्वं न भवति छिन्नकर्णः भिन्नकर्णः स्रुवकर्णः स्व
स्तिककर्णः **अनव्ययविसृष्टस्तु सका**
**रं कपवर्गयोः** अनव्ययस्य संबन्धी विसृष्टो विसर्जनीयः।
कपवर्गयोः परयोः क्वचित्सकारमापद्यते जिह्वामूली
योपध्मानीययोर्बाधः अत्रान्तरपदस्यादकारः। स्वरस्य वि
सर्जनीयस्य कृकमिकंसकुम्भपात्रकुशाकर्णीषु परेषु
समासे सति। अतः कृकमिकंसकुम्भपात्र कु
शाकर्णी ष्वनव्ययस्येति तन्त्रान्तरात् कृ ॥।
अयस्कारः कमि अयस्कामः कंस अयस्कंसः कु
म्भ अयस्कुम्भः पात्र अयस्पात्रम् कुशा अयस्कु
शा कर्णी अयस्कर्णीः उत्तरपदस्थादकारात्परः।
स्य विसर्जनीयस्य न भवति उपपयः कामः आका
रादपि परस्य क्वचित्स्मर्यते भास्करः कपवर्गयोरि
ति किं पयःपवगस्यन्ते तेनेदं न भवति अयोघनः
पयोबिन्दुः अनव्ययविसृष्ट इति किम् स्वःकामः।
अन्तःकामः **इति लघुवृत्तौ नामप्रक**
**रणे समासपादः पञ्चमः ५ औ वाणप**
**त्ये।** अपत्येर्थे लिङ्गादण् प्रत्ययो वा भवति उ
पगोरपत्यम् औपगवः उपगुशब्दादण् णकारो
वृद्धिभावार्थः सैणा इत्यर्थः आदिवृद्धिः उवर्णस्योत्वमा
णाद्य इति ओत्वम् पक्षे उपगोरपत्यम् उपगवपत्यमि
ति समासवाक्ये भवतः संख्यासंभद्रपूर्वाया मातु
रणि परे ऋकारस्य उरादेशो भवति मातुरपत्यं
ख्यासंभद्रपूर्वा याइति तन्त्रान्तरात् षाण्मातुरः।

सौमात्रः भाद्रमात्रः कन्यायाश्चाणि परे कनीनादे
शः कानीनो व्यासः कानीनः कर्णः **ष्यण ।**
**गर्गादेः** गर्गादेर्गणादपत्येऽर्थे ण्यप्रत्ययो भवा
ति गर्गस्यापत्यं गार्ग्यः वात्स्यः यद्वे गर्गस्यापत्यंग
र्गापत्यमिति पौत्रादावपत्ये प्रत्ययो यं स्मर्यते तेन ग
र्गस्य पुत्रो गार्गिः इस्तनइतिइण **पत्यन्ताश्च**
प्रजापतेरपत्यं प्राजापत्यः गार्हस्पत्यः दि
त्यदित्योरेयण्च दैत्यः दैत्येयः आदित्यः आदित्येयः
गर्गवत्सवज्रसङ्कृतिव्याघ्रपात् शाण्डिल्यशङ्कलदि
दृक्षदित्याद्यागर्गादयः **कुञ्जादेरायन ।**
**ण्यस्ततः** कुञ्जादेर्गणात् अपत्येऽर्थे आयनण्
प्रत्ययो भवति तदन्तात्स्वार्थे ण्यप्रत्यय इष्यते स
र्वस्त्रियां बहुत्वे नेष्यते कौञ्जायन्यः कौञ्जायन्यौ ।
कौञ्जायनाः कौञ्जायनी ब्राध्नायन्यः ब्राध्नायन्यौ ब्रा
ध्नायनाः ब्राध्नायनी जाते ङ्योपधादिति ईप्रत्ययः
कुञ्जब्रध्नरणनकुचवलिशुलोदृ इत्याद्याः कुञ्जादयः
**स्त्र्यादेरेयण्** स्त्रीप्रत्ययान्तेभ्यः ।
अत्र्यादिभ्यश्च अपत्येऽर्थे एयण्प्रत्ययो भवति सुप
र्ण्या अपत्यं सौपर्णेयः वैनतेयः गाङ्गेयः नद्या अ
पत्यं नादेयः एवं माद्रेयः रौहिणेयः अत्र्यादिभ्यः ।
आत्रेयः नैधेयः पितृष्वसृमातृष्वसृभ्यामेयणई
यणोश्छ्यातेपयाणिवान्त्यलोपश्च पितृष्वसुरपत्यं पैतृष्वसेयः
पैतृष्वस्रीयः पैतृष्वसेयः मातृष्वसेयः मातृष्वस्रीयः मातृष्व

सेयः कल्याण्यादीनामेयणिपरे अन्त्यस्येनादेशो
भवति कल्याण्यादीनामिनङिति तन्त्रान्तरात् क
ल्याण्या अपत्यं काल्याणिनेयः सुभगाया अपत्यं सौ
भागिनेयः हृद्भगसिन्ध्वन्ते पूर्वपदस्येति तन्त्रान्तरा
उभयपदवृद्धिः अग्निनिचिशुभ्रविष्टिमदकाण्डका
किलासइत्याद्या अग्न्यादयः **इञतः**
अतः अकारान्ताल्लिङ्गात् अपत्येऽर्थे इञ्प्रत्ययो भ
वति दत्तस्यापत्यं दात्तिः ज्ञातिः **बाह्वादे**
**श्चाभिधीयते** बाह्वादेर्गणादपत्येऽर्थे इञ्भ
वति बाह्वोरपत्यं बाह्विः औपबाकविः औपबिन्द
विः बालाकिः सौमित्रिः औडुलोमिः शारलोमिः पौ
ष्करसादिः उडुलोमन् शारलोमन् इत्येतयोः नस्य
तद्धितेइति नलोपः पुष्करसद्शब्दस्य अनुशति
कादीनां चेत्युभयपदवृद्धिः आङ्किः दैवशर्मिः सु
धातृव्यासवरुटनिषादचण्डालबिम्बानामिति परे
अन्त्यस्य अक आदेश इष्यते सुधातुरपत्यं सौधातकिः
वैयासकिः योऽर्हेद्धिरागमइति यकारात्पूर्वमै +
+ कारागमः वारुटकिः नैषादकिः चाण्डाल
किः बैम्बकिः बाहुउपबाकुउपबिन्दुबलाकासुमि
त्रा उडुलोमन् शारलोमन् पुष्करसद् जङ्घादेवश
र्मन् इत्यादयो बाह्वादयः **रागात्** रा
ज्यतेऽनेन रागः रागवाचिनः शब्दात् अण्भवति ।
तेन रक्तमित्यस्मिन्नर्थे काषायेण रक्तं काषायम् कौ

सूक्ष्मम् कौङ्कुमम् हारितालम् **नक्षत्र**
**योगाच्च** नक्षत्रेण योगेनास्य मासेन नक्ष
त्रयोगात् अण् भवति पुष्येण युक्ता पौर्णमासी
पौषी तैषी तिष्यपुष्ययोर्नक्षत्राणीति नक्षत्रा
त् यलोपः सा पौर्णमासी यस्य मासस्य स पौषः तै
षः सास्मिन्पौर्णमासीति संज्ञायामिति ई प्रत्ययान्ता
द् ण् इवर्णावर्णलोपः एवं मघाभिर्युक्ता पौर्णमा
सी माघी सा यस्य मासस्य स माघः फाल्गुनीभिर्यु
क्ता पौर्णमासी फाल्गुनी सा यस्य मासस्य स फाल्गु
नः चित्रया युक्ता पौर्णमासी चैत्री सा यस्य मासस्य
स चैत्रः विशाखया युक्ता पौर्णमासी वैशाखी सा
यस्य मासस्य स वैशाखः ज्येष्ठया युक्ता पौर्णमासी
ज्यैष्ठी सा यस्य मासस्य स ज्यैष्ठः आषाढाभिर्युक्ता पौ
र्णमासी आषाढी सा यस्य मासस्य स आषाढः श्र
वणेन युक्ता पौर्णमासी श्रावणी सा यस्य मासस्य स
श्रावणः भद्रपदाभिर्युक्ता पौर्णमासी भाद्रपदी सा
यस्य मासस्य स भाद्रपदः अश्वयुग्भ्यां युक्ता पौर्णमा
सी आश्वयुजी सा यस्य मासस्य स आश्वयुजः कृत्ति
काभिर्युक्ता पौर्णमासी कार्त्तिकी सा यस्य मासस्य स
कार्त्तिकः मृगशीर्षेण युक्ता पौर्णमासी मार्गशीर्षी
सा यस्य मासस्य स मार्गशीर्षः **समूहात्**
समूहेऽर्थे लिङ्गात् अण् भवति कपोतानां
समूहः कापोतम् शौकम् मायूरम् तित्तिरीणां

मूहः तैत्तिरम् गर्भिणीनांसमूहः गार्भिणम् इ
वर्णोवर्णेलोपः  **सास्यदेवता**  लिङ्गा
त् साऽस्यदेवता इत्यत्रार्थेऽण्भवति शिवोदेवा
ताऽस्य शैवः विष्णुर्देवतायस्य सवैष्णवः एवंबौ
द्धः  **तद्वेत्त्यधीते**  लिङ्गात् तद्वेत्तित
दधीतेइत्यत्रार्थेऽण्भवति छन्दोवेत्त्यधीतेवाछा
न्दसः व्याकरणंवेत्त्यधीतेवावैयाकरणः य्वोर्हि
तागमइतियकारात्पूर्वऐकारागमः  **तस्ये
दम्**  लिङ्गात् तस्येदमित्यत्रार्थेऽण्भवति
मृगस्येदंमार्गंचर्म वेणोरयंवैणवोदण्डः **ए
वमादेस्तत्रभवे**  एवमादावित्यत्रार्थेऽ
ण्भवति तत्रभवः स्रुघ्नेभवः स्रौघ्नः एवंकान्य
कुब्जः मथुरायांभवःमाथुरः ततआगतः स्रुघ्ना
दागतः स्रौघ्नः तत्रजातः स्रुघ्नेजातःस्रौघ्नः
**तेनदीव्यति**  लिङ्गात्तेनदीव्यतीत्यत्रार्थेइक
ण्भवति तेनदीव्यति अक्षैर्दीव्यतिआक्षिकः शा
लाकाभिर्दीव्यतिशालाकिकः  **संसृष्टम्**
तेनसंसृष्टमित्यत्रार्थेइकण्भवति दध्नासं
सृष्टं दाधिकम्  **तरति**  लिङ्गात्तरती
त्यत्रार्थे इकण्भवति नावातरतिनाविकः उडुपेन
तरति औडुपिकः वेणुभारेणतरतिवैणुभारिकः।
**इकण्चरत्यादि**  लिङ्गात्तेनचरती
त्यत्रार्थेइकण्भवति शकटेनचरति शाकटिकः

आश्विकः औष्ट्रिकः चरति जीवनेऽपि वर्तते वेतनेन च
रति वैतनिकः व्यावहारिकः व्यापारिकः स्रोर्हे:
ड्विरागमो नेष्यते स्वागतादीनां चेति तन्त्रान्तरात् ।
**पण्यात्** पण्यं विक्रेयमुच्यते पण्यवा
चिनो लिङ्गात् तदस्य पण्यमित्यत्रार्थे इकण् भवति
लवणं पण्यमस्य लावणिकः गन्धः पण्यमस्य गा
न्धिकः **शिल्पात्** लिङ्गात्तदस्य शिल्प
मित्यत्रार्थे इकण् भवति मृदङ्गः शिल्पमस्य मार्दङ्गि
कः पाणविकः **नियोगाच्च** नियुज्य
ते यत्र स नियोगः नियोगवाचिनः शब्दात् तत्र नियु
क्त इत्यत्रार्थे इकण् भवति द्वारे नियुक्तः दौवारिकः ।
द्वारादीनां चेति वकारात्पूर्वमौकारागमः **क्री
तादेः** क्रीतादावर्थे लिङ्गात् इकण् भवति ते
न क्रीतम् षष्ट्या क्रीतं षाष्टिकम् सप्तत्या क्रीतं सा
प्ततिकम् **आयुधात्** तदस्यायुधमित्य
त्रार्थे इकण् भवति खड्ग आयुधमस्य खाड्गिकः प्रा
सिकः **नावस्तार्ये विषाद्वध्ये तुलया
संमितेऽपि च तत्र साधौ च यः** नौशब्दात्तेन
तार्यमित्यत्रार्थे विषशब्दात् तेन वध्य इत्यत्रार्थे तु
लाशब्दात्तृतीयान्तात् संमिते चार्थे लिङ्गात्तत्र साधु
रित्यत्रार्थे च यप्रत्ययो भवति नावा तार्यं नाव्यम् विषे
ण वध्यः विष्यः तुलया संमितं तुल्यम् अपिशब्दा
त् वयस् शब्दात् तेन तुल्य इत्यत्रार्थे च यप्रत्ययो भ

**द्राघिवृन्दादेशाश्चेष्ठेयन्सोरपि परयोर्भवन्ति** पटिष्ठः पटीयान् पकारात्परस्यात्रान्त्य स्वरादिलोपो नास्ति अयमेषामतिशयेन प्रशस्यः श्रेष्ठः श्रेयान् लोकोपचारात्प्रशस्यशब्दस्य श्रज्य इत्येतौ भवतः प्रथिष्ठः प्रथीयान् म्रदिष्ठः म्रदीयान् भ्रशिष्ठः भ्रशीयान् क्रशिष्ठः क्रशीयान् द्रढिष्ठः द्रढीयान् परिव्रढिष्ठः परिव्रढीयान् स्थूल स्थविष्ठः स्थवीयान् दूर दविष्ठः दवीयान् यविष्ठः यवीयान् ह्रसिष्ठः ह्रसीयान् क्षेपिष्ठः क्षेपीयान् क्षोदिष्ठः क्षोदीयान् प्रिय प्रेष्ठः प्रेयान् स्थिर स्थेष्ठः स्थेयान् स्फिर स्फेष्ठः स्फेयान् उरु वरिष्ठः वरीयान् बहुल बंहिष्ठः बंहीयान् गुरु गरिष्ठः गरीयान् वृद्ध वर्षिष्ठः वर्षीयान् तृप्र त्रपिष्ठः त्रपीयान् दीर्घ द्राघिष्ठः द्राघीयान् वृन्दारक वृन्दिष्ठः वृन्दीयान् **बहोर्लोपो भू च बहोः इष्ठस्य यिट् चेति** बहोः परयोरिष्ठेयन्सोरादिलोप इष्ठस्यैव यिडागमश्च भू आदेशः भूयिष्ठः भूयान् प्रशस्यस्य श्र इति प्रशस्यशब्दस्य इष्ठेयन्सोः श्रादेशः श्रेष्ठः श्रेयान् अयमनयोरतिशयेन प्रशस्यः ज्येष्ठः ज्यायान् ज्य चेति **प्रशस्यशब्दस्य ज्य आदेशः** ज्यादादीयस इति ईयस ईकारस्य आकारः वृद्धस्य चेति **वृद्धशब्दस्यापि** इष्ठे यन्सोः ज्यादेशः अयमेषामतिशयेन वृद्धो ज्येष्ठः अयमेषामतिशयेन वृद्धो ज्यायान्

अन्तिकबाढयोर्नेदसाधौ अयमेषामति शायेनान्तिकः नेदिष्ठः नेदीयान् अयमेषामतिशाये नबाढः साधिष्ठः साधीयान् युवाल्पयोः कनन्यतरस्याम् अयमेषामतिशायेन युवा। कनिष्ठः कनीयान् पक्षे यविष्ठः यवीयान् अयमे। षामतिशायेनाल्पः कनिष्ठः कनीयान् कन्यस इति व माध्वेव अयमेषामतिशायेनाल्पः अल्पिष्ठः अयमनयोरतिशायेनाल्पः अल्पीयान् विन्मतोरि। ष्ठेयन्सोर्लुक् इति अयमेषामतिशायेनतपस्वी तपिष्ठः अयमनयोरतिशायेन तपस्वी तपीया। न् अयमेषामतिशायेन स्रग्वी स्रजिष्ठः अयमनयोरतिशायेन स्रग्वी स्रजीयान् तपस् शब्दस्य इनिलिङ्गेति अन्त्यस्वरादिलोपः स्रज् शब्दस्य नास्ति पकारत्वात् अयमेषामतिशायेन गोमान् गविष्ठः अयमनयोरतिशायेन गोमान् गवीयान् वन्तरपि मन्तरेव तन्त्रान्तरे मतोर्मकारस्य वकारकरणात् तेनातिशायेन धनवान् धनिष्ठः धनीयान् ओजस्वी ओजिष्ठः ओजीयान् आख्यातान्तत्वेऽपि तत्र किंशब्दादेकारान्तादव्ययादाख्यातात्तरतमाविमौ भवतः यथा किंतराम् किंतमाम् पूर्वाह्णेतराम् पूर्वाह्णेतमाम् उच्चैस्तरां पठति उच्चैस्तमाम् सुतराम् नितराम् अनयोस्तमान्न भवत्यनभिधानात् आख्यातात् पचतितराम् पचतितमाम् इत्यविशेषणात्वेन तरतमावेव भवतः।

उच्चैस्तरो देवदत्तः उच्चैस्तमो देवदत्तः सामान्यविशेष
णत्वे यथा उच्चैस्तरां व्याख्यानम् उच्चैस्तमां व्याख्यानम्
व्याख्यातेत्यर्थः प्रशंसायामर्थे रूपम् इष्यते
प्रशंसायां रूपबिति एकारस्त्वन्तादेशस्त्वर्थः प्र
शस्तः पटुः पटुरूपः पण्डितरूपः पचतिरूपम् कुत्सा
यां पाशप् इष्यते याप्ये पाशबिति कुत्सितो विद्वान्।
विद्वत्पाशः सुरूपपाशः पचतिपाशम् ईषद
समाप्तौ कल्पप् देश्यदेशी
यः ईषदसमाप्तः पटुः पटुकल्पः पटुदेश्यः प
टुदेशीयः ईषदसमाप्तः गुडः गुडकल्पा द्राक्षा गुड
देश्या गुडदेशीया ईषदसमाप्तं पचति पचतिकल्प
म् पचतिदेश्यम् पचतिदेशीयम् भूतपू
र्वे चरट् टकार ईप्रत्ययार्थः आढ्यो भूतपूर्वः आ
ढ्यचरः आढ्यचरी असहायवाचिन एकशब्दात् का
किनौ वा एकादाकिनिच्चासहाये इ
ति एककः एकाकी तेन प्रख्यात इत्यर्थे चञ्चुप्
चणपौ तेनवित्तश्चुञ्चुप्चणपाविति
केशैः प्रख्यातः केशचञ्चुः केशचणः अत्ताच।
ञ्चुः अत्ताचणः तदस्य सञ्जातमित्यर्था।
र्थे तारकादिभ्य इतजिति तारकाः सञ्जाता
अस्य तारकितं नभः सुखं संजातमस्य सुखितः दुःखि
तः तारका सुख दुःख पुष्प स्तवक कुसुम कुट्मल
मुकुल अङ्कुर कोरक कन्दल पल्लव कण्टक किस।

नय निद्रा तन्द्रा बुभुक्षा पिपासा उत्कण्ठा श्रद्धाभ्रभरो। गर्भीलवेगव्याधिव्रणगर्भ इत्यादयस्तारकादयः तदस्य प्रमाणमित्यत्रार्थे द्वयसच् दघ्नच् मात्रच् एते प्रत्यया भवन्ति **प्रमाणेद्वयसज्दघ्नञ्मात्रचस्ति** ऊरू प्रमाणमस्य ऊरुदघ्नं जलम् ऊरुद्वयसम् ऊरुमात्रम् **पुरुषहस्तिभ्यामण्च** पुरुषः प्रमाणमस्य पौरुषं जलम् एवं हास्तिनम् पुरुषद्वयसम् पुरुषदघ्नम् पुरुषमात्रम् एवं हस्तिद्वयसमित्यादि **यत्तदेतद्भ्यःपरिमाणेवतुः** यत्परिमाणमस्य यावान् तावान् एतावान् दृग्दृशवतुष्वित्यात्वम् प्रमाणमङ्गुलहस्तादिक्यादिमेयमानं परिमाणन्तु यवतोलकपीठादिमेयम् तेनप्रमाणपरिमाणभेदाद्यावन्मात्रमित्यपि भवति दिष्टिद्दुइतिकश्मीरभाषयाद्वादशाङ्गुलमानम् **अत्रेवधारणेमात्रइष्यते** छायामात्रमपिग्राह्यंसर्पस्पृष्टान्नचन्दनात् **इदंश्चाशादियन्तुरिष्यते** इदंपरिमाणमस्य इयान् इदमोऽत्र इकारादेश इष्यते इवर्णावर्णाविति तस्य लोपः **किमश्चात्रडियन्तुरिष्यते** किंपरिमाणमस्यकियान् डानुबन्धत्वेन्त्यस्वरादेर्लोपः **द्वयसजादीनांस्त्रियामीकारः** टिड्ढाणञ्द्वयसज्दघ्नञ् मात्रच् तयपितिसूत्रात् ङीप् नाभिद्वयसीनदी नाभिदघ्नी तस्मादत्रिमा।

त्रीस्रुम्भवति **एकवर्जितायाः संख्यायाः**
संख्यावयवइत्यत्रार्थे तयप् **संख्याया।**
**अवयवे तयबिति** चत्वारअवयवायस्यतत् च
तुष्टयम् चतुष्टयमित्यत्रनिर्देवहिरादिः प्राड्घा।
मितिविसर्जनीयस्य सः तस्यनामिकरेति सस्य षः
तवर्गःषटेति षात्परस्य तस्य टः स्त्रियां टिड्ढाणञिति
ईकारः चतुष्टयीशाखानांप्रवृत्तिः **द्वित्रिभ्यां**
**तयस्यायज्वा** द्वितयं द्वयम् त्रितयम् त्रयम्
द्वयी त्रयी पूर्ववदीकारः उभशब्दात्परस्य तयपो नित्य
मयजादेशः **उभादुदात्तो नित्यमिति**
उभाववयवौ यस्य स उभयः उभयम् उभयीगतिः सं
ख्यापरिमाणेऽर्थे किंशब्दात् डतिर्विधीयते **कि**।
**मः संख्यापरिमाणे डति चेति** किं संख्या
येषां ते कति ब्राह्मणाः कति ब्राह्मण्यः कति कुलानि।
बह्वर्थादल्पार्थाच्च कारकाच्छस् **बह्वल्पा**
**र्थाच्छस् कारकादन्यतरस्यामिति** बहू
न्ददाति बहुशो ददाति अल्पान्ददाति अल्पशो ददा
ति एवं एकशो ददाति शासि बह्वल्पार्थस्येति बह्वीस्तो
काभ्यांवह्वावः बह्वीभ्यो ददाति बहुशो ददाति कार
कत्वाभावादिह न भवति बहूनां पुत्रः अल्पानां पुत्रः।
अत्र संबन्धषष्ठी संख्यावाचिन एकवचनान्ताद्वीप्सा
याम् **संख्यैकवचनाद्वीप्सायामिति**
द्वौ द्वौ ददाति द्विशो ददाति पञ्च पञ्च भूत्वा प

च्चपाः एकवचनान्तात् पादं पादं ददाति पादशो ददा
ति **अभूततद्भावे कृभ्वस्तीनां च्वियोगे**
**च्विः** अशुक्लं शुक्लं करोति शुक्लीकरोति अशु
क्लः शुक्लः संपद्यते शुक्लीभवति अशुक्लः शुक्लः।
स्यात् शुक्लीस्यात् मालीकरोति मालीभवति माली
स्यात् वकारः अस्यच्वावित्यर्थः अस्यच्वाविति अवर्ण
स्य ईत्वम् अपटुः पटुर्भवति पटूभवति अनग्निमग्निं
करोति अग्नीकरोति च्वौचेति दीर्घः अकर्तारं कर्ता
रं करोति कर्त्रीकरोति कर्त्रीस्यात् रीङृत इति रिआदे
शः कार्त्स्न्ये गम्यमाने सात्प्रत्ययः **विभाषा**
**सातिः कार्त्स्न्ये इति** सर्वं शस्त्रं वह्निः संप
द्यते वह्निसात् सर्वं उदकं दधि संपन्नं दधिसात्
**तदधीनवचने चार्थे** राजाधीनं करोति रा
जसात्करोति धनम् अत्र सस्य सकारस्य षत्वे प्राप्ते।
सात्पदाद्योरिति निषेधाभावः **संख्यायाः क्रि**
**याभ्यावृत्तिगणने कृत्वसुच्** पञ्चवारान्
पञ्चकृत्वः **द्वित्रिचतुर्भ्यः सुच्** द्वौवा
रौ द्विः त्रिः चतुः रात्सस्येति संयोगान्तलोपः एकस्य
सकृदादेशः **एकस्य सकृच्चेति** एकवा
रं भुङ्क्ते सकृद्भुङ्क्ते भावत्सलोपः नरानमांशस् च्वि
कृत्वसुच् एतदन्तानि अलिङ्गसंख्यत्वादव्ययानीत्यन्त
म् एवमन्येपि तमादयोपि लक्ष्यादनुसरणीयाः
**समासान्तगतानां वा राजादीनामदन्तता।**

ता समासान्तगतानां समासस्योत्तरपदभूता
नां राजादीनां शब्दानां अदन्तता वा भवति अकारः प्र
त्ययो वा भवतीत्यर्थः वाशब्दो व्यवस्थितविभाषार्था
स्तेन स्वतिभ्यः परेषां राजादीनां समासान्तो न भव
ति तत्र राजाहःसखिभ्यस्तत्पुरुषे टच्प्रत्ययो भवति
राजाहःसखिभ्यष्टजिति पौलानां राजा पौलराजः
महांश्चासौ राजा महाराजः पञ्चानां राज्ञां समाहारः
पञ्चराजी कर्मधारयद्विगोस्तत्पुरुषावुभाविति त
त्पुरुषत्वात् द्विगोरितीईप्रत्ययः एवं परमं च तदहः
परमाहः उत्तमाहः राजाह्नाहाःपुंसीतिपुंस्त्वम् मे
रोःसखा मेरुसखः व्यवस्थितविभाषात्वादिह न भ
वति स्वराजा अतिराजा असखा किमःपरेषां राजा
दीनां निन्दायां गम्यमानायां व्यवस्थितविभाषयैव न
भवति कुत्सितश्चासौ राजा किंराजा सकिंसखा सा
धुन सखास्ति योथिंपदिमात्वयः संपूर्णत्वेन सकिंशब्दः
गोशब्दादपि तत्पुरुषे एव टच् गोरतद्धितलुकीति पु
मांश्चासौ गौः पुङ्गवः वर्ग्ये वर्गान्तः राज्ञो गौः राजग
वी षड्गवन्यत्वादीकारः पञ्चगावो धनं यस्य पञ्च
गवधनः पञ्चानां गवां समाहारः पञ्चगवम् तत्पु
रुषावुभाविति तत्पुरुषत्वम् पात्रादित्वादीप्रत्यया
भावः पञ्चराजीतिवत्समासान्ते कृते अदन्तत्वाद्द्वि।
गोरिति ईकारः स्यात् पञ्चभिर्गोभिः क्रीतः पञ्चगु।
विग्रहद्विगोर्लुगनपत्ये इतिइकणस्तद्धितस्यलुकिस

वति वयसातुल्योवयस्यः कर्मणिसाधुः कर्मण्यः श
रणेसाधुः शरण्यः **ईयस्त्वाहिते** लिङ्गात्त
स्मैहितमित्यस्मिन्नर्थेईयप्रत्ययोभवति अपूपेभ्योहितम्
अपूपीयम् करभीयम् पारीतादयवादयः दन्तेभ्योहि
ते दन्त्यम् कर्ण्यम् कण्ठ्यम् **यदुगवादितः**
उवर्णान्ताल्लिङ्गात् गवादिभ्यश्चहितेऽर्थेयत्
भवति शङ्कुभ्योहितम् शङ्कव्यंदारु * *
* * परशवेहितं परशव्यंशस्त्रम् वध्र
हितंवध्र्यंवासः गवादिभ्यः गोभ्योहितंगव्यं यो।
ग्यम् आग्र्यम् पथ्यम् अर्घ्यम् हृद्यम् बल
ल्यः येभ्यःशब्देभ्योहितेऽर्थेयप्रत्ययोदृश्यते तेगवा
दयः **उपमानेवतिः** उपमानवाचिनः
शब्दात् वतिप्रत्ययोभवति इकारउच्चारणार्थः वे
दमिवाधीते वेदवत् क्षत्रियइवक्षत्रियवत् मथुरा।
यामिवमथुरावत् **तात्वौभावे** भव।
तीत्यस्मादभिधानप्रत्ययाविति भावः येनहेतुनापदार्थे
प्रवृत्तानेप्रवर्तते तस्मिन्नभिधेयेलिङ्गान्तात्तौ प्रत्य।
यौभवतः सचजातिगुणक्रियाद्रव्यभेदेनचतुर्धा ।
गोःभावः गोता गोत्वम् शुक्लता शुक्लत्वम् पाचक
ता पाचकत्वम् डित्थता डित्थत्वम् **यण्वश्चा**
**कीर्तितः** भावेऽर्थेलिङ्गात् यण्प्रत्ययःप्रकी
र्तितः पूर्वाचार्यैः चशब्दात्त्वौच वर्णादिभ्योदृढादि
भ्यश्चभावेऽर्थेयण् पूर्वाचार्यैरुक्तः इदानीमपिभवतीत्य।

र्थः शुक्लस्य भावः शौक्ल्यं कृष्णस्य भावः कार्ष्ण्यम् एवं
लौहित्यम् धौम्रयम् शुक्लस्य भावः शुक्लता शुक्लत्वम्
इत्यादि दृढादिभ्यश्च दृढस्य भावः दाढ्यम् सौहित्य
म् सौकर्यम् नैर्ह्रण्यम् नैसृष्ट्यम् लालित्यम् औ
त्सुक्यमित्यादि **तदस्यास्तीति मत्वर्थाः**
लिङ्गात्तदस्यास्तीत्यर्थे मत्वादयः प्रत्यया भवन्ति
इति प्राहोर्थान्तरेपि मत्वादीनां प्रवृत्त्यर्थः तेन तद
स्मिन्नस्तीत्यर्थेपि भवन्ति गावोस्य सन्ति गोमान्
देवदत्तः गावोस्मिन्सन्ति गोमान्देशः श्रीमान्गिरिः
पर्वतो वा मकारान्तात् मकारोपधात् अवर्णान्ता
त् अवर्णोपधात् झयन्तात् पिङ्गिलात् वन्तरित्य
ने यवादीन्वर्जयित्वा मकारान्तात् किंवान् शंवान्
इदंवान् मकारोपधात् शमीवान् शामीवान् अव
र्णान्तात् धनवान् मालावान् अवर्णोपधात् स्वर
एवान् सरस्वान् झयन्तात् विद्युत्वान् समित्वान् पि
ङ्गिलादिति वचनादिह न भवति सर्पिष्मान् आयु
ष्मान् यवादीनामपि वर्जितत्वान्नत्वमेव यवमान्
ऊर्मिमान् असन्तान्मायामेधास्रग्भ्यश्च विनिर्भ
वति यशस्वी तपस्वी मायावी मेधावी स्रग्वी
**आमयादीर्घश्च** आमयावी वन्तस्योप
ध्यो भवति यशस्वानित्यादि अकारान्तात् व्रीह्या
दिभ्यश्च इन्नियासि दण्डी चक्री वज्री छत्री व्रीह्या
दिभ्यः इन् व्रीहिकेदारः शिखा शिखी माया मा

यी दंष्ट्रा दंष्ट्री चोला चोली **हस्तदन्तकरा**
**ज्जातौ** हस्ती दन्ती करी अन्यत्र हस्तवानित्यादि
वर्णाद्ब्रह्मचारिणि वर्णी वर्णवानन्यः एवमन्येपि।
मत्वाद्या अनुसरणीयाः **संख्यायाः पूर**
**णे डमौ** पूर्यते येन स पूरणः पूरणार्थे संख्या
या डमौ प्रत्ययौ भवतः चतुर्णां पूरणः चतुर्थः एकाद
शानां पूरणः एकादशः अनेन डः अन्तस्याडेथौरिति।
थकारागमः। ह्रस्वस्य दीर्घत्वेनेति एकशब्दस्य दीर्घः द्वा
दशः त्रयोदशः अष्टादशः द्व्यष्टनोः संख्यायामिति।
द्व्यष्टनोरात्वम् त्रेस्त्रयमिति शब्दस्य त्रयस् आदेशः
नान्तादसंख्यादेर्मः पञ्चमः सप्तमः नवमः दशमः
**द्वेस्तीयः** द्विशब्दात्पूरणार्थे तीयप्रत्ययो
भवति द्वयोः पूरणो द्वितीयः **त्रेस्तृच** त्रि
शब्दात्पूरणार्थे तीयप्रत्ययो भवति त्रेस्तृ आदेशः तृ
तीयः **अन्तस्याडेथौः** रेफषकारान्त
योः संख्ययोः डप्रत्यये परे थकारागमो भवति सर्वेस
स्वरः चतुर्थः षण्णां पूरणः षष्ठः तवर्गस्य टवर्गात् ष्टु
वर्ग इति थस्य ठः **कतिपयात्कतेः** क
तिपयशब्दात् कतिशब्दाच्च परस्मिन् डप्रत्यये थका
रागमो भवति कतिपयानां पूरणः कतिपयथः क
तीनां पूरणः कतिथः **विंशत्यादेस्तम**
**ट्** विंशत्यादेर्गणात्पूरणार्थे तमट् प्रत्ययो भव
ति विंशतेः पूरणः विंशतितमः त्रिंशतः पूरणः त्रिं।

शततमः इकार ई प्रत्ययार्थः उत्तरत्र नित्यग्रहणादि
ह विकल्पः तेन पक्षे डोऽपि भवति विंशः त्रिंशः तेर्वि
शतेरपि डिति तिशब्दस्य अन्त्यस्वरादेर्लोपः विंशति
त्रिंशत् चत्वारिंशत् पञ्चाशत् षष्टि सप्तति अ।
शीति नवतिः इति विंशत्यादिः **नित्यं**
**शतादेः** शतादेः संख्यायाः पूरणेऽर्थे नित्यं
तमट् प्रत्ययो भवति उस्यवादः शतस्य पूरणः श
ततमः सहस्रतमः अयुततमः **षष्ट्यादे**
**रतत्परात्** षष्ट्यादेः संख्याशब्दात् अतत्परा
त् पूरणेऽर्थे नित्यं तमट् प्रत्ययो भवति षष्टेः पूरणः।
षष्टितमः सप्ततितमः अशीतितमः नवतितमः।
संख्यापरात्तु विंशत्यादेस्तमडिति विकल्प एव एक
षष्टेः पूरणः एकषष्टः एकषष्टितमः द्वासप्ततः
द्वासप्ततितमः **विभक्तिसंज्ञा विज्ञेया**
**वत्वन्ते नः परं तथे अद्यादेः सर्वनाम्नस्तु**
**किंबहोश्च पराः स्मृताः** अत एतस्मात्सू
त्रात्परमनन्तरं ये प्रत्ययावत्वन्ते ते विभक्तिसंज्ञा
विज्ञेया विज्ञातव्याः तेन द्व्यादिगणवर्जितात् सर्व
नाम्नः किंबहुशब्दाभ्यां च पराः स्मृताः पूर्वाचार्यैः त
तः तत्र कुतः कुत्र बहुतः बहुत्र विभक्तिनान्यदा।
व्ययम् **तेत्रेदमिः** तत्र तेषु तसादिषु
परेषु इदम् शब्दस्य इकारादेशो भवति इतः इह।
अधुना इदानीम् **रथोरेतत्** इदमो

रेफषकारयोः परयोः यथासंख्यं एत इत् इत्येता
वादेशौ भवतः अस्मिन्काले एतर्हि अनेन प्रकारेण इ
त्थम् **नेद्वत्येतदकारताम्** सेद्रुत
सादिद्रुपरे द्रुपतत् थाहः अकारताम्प्राप्नोति अकारः
सम्पद्यते इत्यर्थः अतः अत्र **पञ्चम्यास्तस्**

किंबहुद्वाभ्यामाद्यादिगणवर्जितात् सर्व
नाम्नः पञ्चम्यन्तेभ्यः तस् प्रत्ययो भवति कस्मात् कु
तः तद्भोः कुरिति कु आदेशः बहुभ्यः बहुतः सर्वतः
विश्वतः यतः ततः उभाभ्याम् उभयतः अस्मात् अ
मुष्मात् एकतः अद्यादेरिति किम् द्वाभ्याम् **त्र
सप्तम्याः** किंबहुसर्वनामभ्यः सप्तम्यन्तेभ्यः
त्र प्रत्ययो भवति कस्मिन् कुत्र बहुषु बहुत्र सर्व
त्र यत्र तत्र उभयत्र एकत्र अद्यादेरिति किम् द्वयोः
त्वयि मयि भवति **इदमो हः** इदमः स
प्तम्यन्तात् ह प्रत्ययो भवति अस्मिन् इह **कि
मः** किंशब्दात्सप्तम्यन्तात् ह प्रत्ययो भवति कु
ह छान्दसप्रयोगः **क्वाति** कि
मः सप्तम्यन्तात् अत् प्रत्ययो भवति किमः क्व आ
देशः तकारो विशेषार्थः कस्मिन् क्व **तहोः
कुः** किमः तकारहकारयोः परयोः कु आदे
शो भवति कुतः कुत्र कुह तहोरिति किम् कस्मिन्का
ले कदा किंक इति कादेशः **कालेकिंसर्व
यदेकान्येभ्यएवदा** किम् सर्व यद् एक।

अन्येभ्यः सप्तम्यन्तेभ्यः कालविषये दाप्रत्ययो भवति कस्मिन्काले कदा एवं सर्वदा यदा तदा एकदा अन्यदा काले इति किम् कस्मिन्देशे क्व सर्वत्र यत्र । तत्र एकत्र अन्यत्र **इदमोर्हिधुनादानीम्**

इदंशब्दात् सप्तम्यन्तात् कालविषये र्हि अधुना दानीम् इत्येते प्रत्यया भवन्ति अस्मिन्काले एतर्हि र्ह्योरेतेत् इति इत्वं तस्य इवर्णावर्णलोपः इदानीम् काले इति किम् अस्मिन्देशे इह **दादीनोमौ तदः स्मृतौ** तदः तच्छब्दात् सप्तम्यन्तात् दादानीमौ प्रत्ययौ स्मृतौ पूर्वाचार्यैः तस्मिन्काले तदा। तदानीम् किमस्तर्हिं प्रत्ययोपीष्यते तस्मिन्काले तर्हि कर्हि काले इति किम् कुत्र तत्र **सद्यआद्या निपात्यन्ते** सद्यआद्यशब्दा निपात्यन्ते साधुत्वेन कथ्यन्ते सद्यः परुत् परारि ऐषमः परेद्यवि अद्य पूर्वेद्युः अन्येद्युः अपरेद्युः अन्यतरेद्युः इतरेद्युः अपरेद्युः उभयेद्युः उभेद्युः एते सद्यआद्याः समाने अहनि सद्यः समानशब्दात् अहन्यर्थे यस् प्रत्ययो निपात्यते समानशब्दस्य च सभावः पूर्वपूर्वतरशब्दयोर्वर्षेर्थे यथासंख्यं उत् आरि प्रत्ययौ भवतः तयोश्च पर आदेशः पूर्वस्मिन्वर्षे परुत् पूर्वतरे परारि इदंशब्दस्य वर्षेर्थे समस्प्रत्ययो निपात्यते इदमश्च ऐ आदेशः अस्मिन्वर्षे ऐषमः परशब्द इदंशब्दाभ्यां अहन्यर्थे एद्यविप्रत्ययौ निपात्येते इदमश्च अकारादेः ।

षः परस्मिन्नस्मिन्नहनि परेद्यवि अस्मिन्नहनि अ
द्य पूर्व अन्य अन्यतर इतर अपर अधर उभय उत्तरे
भ्यः अहन्येवार्थे एद्युस् निपात्यते पूर्वस्मिन्नहनि पू
र्वेद्युरित्यादिवाक्यम्   **पुरस्तादादयश्च**
पुरस्तादादयः शब्दा निपात्यन्ते पूर्व अधर अवरश
ब्देभ्यः सप्तमी पञ्चमी प्रथमान्तेभ्यः दिशिदेशेकाले
ऽर्थे अस्तात् अस् प्रत्ययौ निपात्येते एवंक्रमेण पुर्
अध् अव् एते आदेशाश्च   **पूर्वस्यां दिशि पू**
**र्वस्मिन्देशे पूर्वस्मिन्काले पुरस्तात्तिष्ठति**
पूर्वस्या दिशः पूर्वस्माद्देशात् पूर्वस्मात्कालात्
पुरस्तादागतः पूर्वादिक पूर्वदेशः पूर्वःकालः पुर
स्ताद्रमणीयम् एवंपुरस्तिष्ठति पुरआगतः पुरोर
मणीयम् एवम् अधस्तात् अधः अवस्तात् अवःइत्यादि
ज्ञेयम् उत्तर अधर दक्षिणेभ्यः सप्तमी प्रथमान्तेभ्यः
दिग्देशकालेष्वर्थेषु एनप्रत्ययो भवति   **एन**
**बन्यतरस्यामदूरेऽपञ्चम्याः इति**   उत्तरस्यां
दिशि देशेकाले उत्तरेण तिष्ठति उत्तरादिक देशःका
लोवा उत्तरेणरम्यम् एवम् अधरेण दक्षिणेन
**ऊर्ध्वशब्दस्य सप्तमीपञ्चमीप्रथमान्तस्य**
**दिग्देशकालेष्वर्थेषु रिरिष्टातप्रत्ययौ तत्र**
**त्रोपरनिपातितो.**   तस्य च उपआदेशः उपरि
उपरिष्टात् इति ऊर्ध्वायांदिशिदेशेकालेवा उपरि उ
परिष्टात् तिष्ठति एवं उपरि उपरिष्टादागतः उपरि

उपरिष्टाद्रम्यम् उपरि उपरिष्टात्पश्य उपरि उपरिष्टा
देहि इति द्वितीयाचतुर्थ्योर्नियोरपि इष्यते सोपसर्गो
दञ्चतेरपूर्वोऽञ्चु अञ्चेः क्विबन्तस्य सप्तम्याद्यन्तात्परस्य अ
स्तात् प्रत्ययस्य लुग्भवति अञ्चेर्लुगिति पूर्वस्यां दि
शि देशे काले वा प्राक्तिष्ठति प्रागागतः प्राक्र
म्यं एवं प्रत्यक् उदक् अवाक् अधराक् इति **प्र**
**कारवचने थाल्** प्रकारस्य वचने अभिधाने
सति सर्वनाम्नः थाल्प्रत्ययो भवति सर्वैः प्रकारैः स
र्वथा विश्वथा उभाभ्यां प्रकाराभ्याम् उभयथा यथा
तथा अन्यथा अपरथा इतरथा अन्येषां सर्वनाम्नां न
भवति अनभिधानात् संख्यायाः प्रकारवचने धाप्र
त्ययः **संख्याया विधार्थे धा इति** ए
कधा द्विधा त्रिधा चतुर्धा पञ्चधा षड्भिः प्रकारैः षो
ढा षड्ढा षड् शब्दात् धाप्रत्ययः पृषोदरादित्वा
दुत्वस्य वा उत्वम् धस्य च ढत्वम् ष्टुनाष्टुरिति धस्य ढः
तवर्गः षडेति धस्य ढः द्वित्रिशब्दाभ्यां धाप्रत्ययस्य धमुञो
च भवतः **द्वित्र्योश्च धमुञ्धा वेति त**
**न्वान्तरात्** द्वैधा द्वैधम् त्रैधा त्रैधम् एक
शब्दात् धाप्रत्ययस्य ध्यमुञादेशो भवति **ए**
**काद्धो ध्यमुञन्यतरस्यामिति** ऐकधा ऐक
ध्यम् **इदंकिंभ्यां थमुः कार्यः** इदंकिंभ्यां
प्रकारवचने सति थमुप्रत्ययः कार्यः उकार उच्चार ।
णार्थः अनेन प्रकारेण इत्थम् रथोरेतेत् इति इदः ।

तिसमासान्तो नास्ति अतद्धितलुकीति वचनात् भागव-
दिद्गन भवति स्वगौः अतिगौः नगौः अगौः तत्रकथा
दन्यत्र न भवति अदन्तता महाराजायस्मिन्देशे सम
हाराजा प्रियःसखायस्य सप्रियसखिः सख्युरप्रधान
स्यकार्यं न भवतीत्युक्तम् तेन सख्युश्चेतिअत्र न भव-
ति सख्युर्गोश्चविधीद्वित्वाद्गुणीभूतेष्वपीतरे इतिपरि
गणनात् चित्रागावोयस्य सचित्रगुः इहापिगोशब्द
स्याप्रधानत्वादेवगोरौत्वेदीति ओकारोनास्ति लिङ्गवि-
शिष्टपरिभाषाया अनित्यत्वात् प्रातिपदिकग्रहणे
लिङ्गविशिष्टस्यापि ग्रहणमितिपरिभाषा महतीचा
सौ राज्ञी महाराज्ञी इत्यत्र समासान्तो न भवति

**ऋक्पूरब्धूःपथामकारः** अर्धर्चः अ-
र्धर्चः अर्धर्चम् अर्धर्चाः पुंसिचेतिच पाठेन नपुंसक-
त्वेभवति तिसृणामृचां समाहारः त्र्यृचमित्युक्तम् ऋ
चिः ऋलोपश्चेति द्विपाद्दस्य संप्रसारणे ऋचः ऋका
रस्य च लोपः पञ्चर्चम् सप्तर्चम् **अनृचो मा
णवे** अन्यत्र अनृक्साम बह्वृचो वेदे अन्यत्र बा-
ह्वृक्सूक्तम् शेषाद्विभाषेतिकप् राज्ञः पूः राजपु
री गौरादित्वादीकारः अग्नीषाहोर्णरपदमितिचेत् न
राजपूरितिमाभूत् इतिपूर्वग्रहणम् अप् द्विधागता आ
पोयत्रतद्द्वीपम् अन्तर्गता आपोयत्र तदन्तरीपम् सं
गता आपोयत्रतत्समीपम् प्रतिगता आपोयत्रतत्
प्रतीपम् द्व्यन्तरुपसर्गेभ्योऽपईदितिअपोऽकारस्य ई-

त्रम् पथि पथां राज्ञा राजपथः चतुर्णां पथां समाहा-
रः चतुष्पथम् निर्देशविरामविसर्गस्य षत्वमिति रेफ।
स्याविसर्जनीयस्य षत्वम् संख्यासोपथ्याः सत्पथः
अपथं अपथ्यं नपुंसकम् इति नपुंसकत्वम् पदे अप।
त्या अपन्था स्वपथं तस्य इति कोषः समासान्तस्या।
त्वनभवति अनेन यस्य पथा रायेऽस्मान् अनतान्नरः
राज्यस्यभः राज्यभरा अतान्यस्य अतभूः

**संख्याव्ययादेरङ्गुलेः** पञ्चानां
मङ्गुलीनां समाहारः पञ्चाङ्गुलम् द्वे अङ्गुली प्रमा।
णमस्य द्व्यङ्गुलम् अङ्गुलम् निर्गतमङ्गुलिभ्यो निर।
ङ्गुलम् संख्याव्ययादेरिति निन्नान्तत्वात् अकारः समा
सान्तः संख्याव्ययादेरिति किम् विरलाङ्गुलिर्हस्तः।

**अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः** अहश्च रात्रिश्च अहोरात्रः सर्वा चासौ रात्रिः स
र्वरात्रः अर्धं रात्रेः अर्धरात्रः पूर्वं रात्रेः पूर्वरात्रः पश्चा।
द्रात्रः तिस्रो रात्रयो यत्र तत् त्रिरात्रमायोधनम् दशरा
त्रम् त्रिरात्रमित्यादौ विशेषणत्वात् रात्राह्नाहाः पुंसी
ति पुंस्त्वं नास्ति तिसृणां रात्रीणां समाहारः त्रिरात्रमि
त्यपि नपुंसकत्वं लक्ष्यात् संख्याता चासौ रात्रिः संख्या
तरात्रः पुण्या चासौ रात्रिः पुण्यरात्रः **अह्नोऽह्न एतेभ्यः** अत्र अहः सर्वथा न भवति अनभिधाना
त् लक्ष्ये अकथनात् अह्नः पूर्वो भागः पूर्वाह्णः म
ध्याह्नः अपराह्णः सायाह्नः संख्यादेरह्नो नास्ति ना

संख्यादेः समाहारे इति त्रयाणामह्नां समाहारः त्र्यहः। पञ्चाहः सप्ताहः रात्राह्नाहाः पुंसीति पुंस्त्वम् पुण्या हान्तस्याह्नः अह्नादेशो नास्ति पुण्यसुदिनाभ्या मह्न इति अह्नरूपस्य नपुंसकवचनात् पुण्यं च तदहः पुण्याहम् सुदिनाहम् **प्रत्यन्ववपूर्वाभ्यां सामलोमभ्यामच्** अच्प्रत्यन्वव पूर्वात्सामलोम्नोऽजिति प्रतिसामम् प्रतिलोमम् अनुलोमम् अवलोमम् अनुसामम् अवसामम् प्रतिलोमाक्षी प्रतिसामाक्षी प्रतिलोमाक्षी अनुसामाक्षी **संख्याया नदीगोदावर्योः** पञ्चनदम् पञ्चगोदावरम् पद्मनाभोर्णनाभदीर्घरात्रवर्षारात्राणि निपात्यन्ते पद्मो नाभौ यस्य सः पद्मनाभः ऊर्णा नाभौ यस्य सः ऊर्णनाभः दीर्घा चासौ रात्रिः दीर्घरात्रः वर्षा रात्रिरिव वर्षारात्रः वर्षाकाल इत्यर्थः **अचतुरविचतुरसुचतुरत्रिचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः** एतेऽच्समासान्ता निपात्यन्ते न विद्यमानाश्चत्वारो यस्य सः अचतुरः विगताश्चत्वारो यस्मात्स विचतुरः शोभनाश्चत्वारो यस्य सः सुचतुरः त्रयो वा चत्वारो वा त्रिचा

नरः स्त्री च पुमांश्च स्त्रीपुंसौ धेनुश्चानड्वांश्च धेन्वनडु-
हौ ऋक् च साम च ऋक्सामे वाक् च मनश्च वाङ्मनसे
अक्षिणी च भ्रुवौ च अक्षिभ्रुवम् प्राण्यङ्गत्वात् समाहा-
रे द्वन्द्वः दाराश्च गावश्च दारगवम् ऊरू च अष्ठीव-
न्तौ च ऊर्वष्ठीवम् पादौ च अष्ठीवन्तौ च पदष्ठीवम्
अत्र समाहारे द्वन्द्वः निपातनात् टच् पादस्य पद्
आदेशः अष्ठीवच्छब्दस्य अन्त्यस्य लोपः नक्तं च
दिवा च नक्तन्दिवम् रात्रौ च दिवा च रात्रिन्दिवम् अ-
ह्नि च दिवा च अहर्दिवम् सह रजसा वर्त्तते सरजा-
सम् निश्चितं श्रेयः निःश्रेयसम् पुरुषस्य आयुः पुरु-
षायुषम् द्वयोः आयुः द्व्यायुषम् त्रयाणाम् आयुः त्र्या-
युषम् **ऋक् च यजुश्च ऋग्यजुषम्**
जातश्चासौ उक्षा जातोक्षः महांश्चासौ उक्षा महोक्षः
एवं वृद्धोक्षः शुनः समीपम् उपशुनम् गोष्ठे श्वा गोष्ठ-
श्वः **ब्रह्महस्तिपल्यराजभ्यो वर्च्चसः**
ब्रह्मवर्च्चसम् हस्तिवर्च्चसम् पल्यवर्च्चसम् रा-
जवर्च्चसम् **अवसमन्धेभ्यस्तमसः**
अवतमसम् सन्तमसम् अन्धतमसम्
**श्वसो वसीयःश्रेयसोः** श्वोवसीयम् श्वः-
श्रेयसम् **अन्ववतप्ताद्रहसः** अनु-
रहसम् अवरहसम् तप्तरहसम् **उपसर्गा-
दध्वनः** प्रगतः अध्वा प्राध्वः प्रतिगतः अ-
ध्वा प्रत्यध्वः अयःसरसो जातिसंज्ञयोः कालायसम्

वज्रायसम् देवसरसम् विद्वत्सरसम्  नावो
द्विगोः  पञ्चनावम् पञ्चनावप्रियः  अ
र्धाच्च  अर्धनावः अर्धनावम्  खार्या वा
अर्धखार्योः खार्यर्धः अर्धखारं अर्धर्चवत्वान्नपुं
सकत्वम् पक्षे अर्धखारी  चवर्गदकारष
कारहकारान्ताद्द्वन्द्वात्समाहारे  वा
क्त्वचम् श्रीस्रजम् वाग्दृषदम् वाग्विप्रुषम् छत्रो
पानहम् समाहारादन्यत्र वाक्त्वचः स्यात्सुप।
लदृषदः  अव्ययीभावे शरत्प्रभृतिभ्यः।
भ्यः  शरदं शरदं प्रति प्रतिशरदम् अहनि
अहनि प्रति प्रत्यहम् अन्वहम्  गिरेश्च।
सेनकस्य  सेनकग्रहणाद्विभाषार्थम् अ
न्तर्गिरम् अन्येषामाचार्याणां मते अन्तर्गिरि
बहुव्रीहौ संख्येये डजबहुगणात्  द
शानां समीपे ये सन्ति ते उपदशाः उपविंशाः आसन्नद
शाः आसन्नविंशाः अदूरदशाः अदूरविंशाः अधि
कदशाः अधिकविंशाः द्वित्राः त्रिपञ्चाः पञ्चषाः
दशविंशाः संख्ययाव्ययासन्नादूराधिकसंख्याः संख्ये
ये इति बहुव्रीहिः  सक्थ्यक्ष्णोःषच्
षकारः स्त्रीत्वार्थादीकारः गौरसक्थः एकाक्षः।
ङीषन्तीतियस्य संग्रहः कोटराक्षः सहस्राक्षः।
स्वातिन्सूर्वेयोरधीक्ष्णते  सस
क्थः स्वन्तः अतिसक्थः अत्यन्तः असक्थः अनन्तः

प्रतिपादिते अक्षिणीयस्येतिवाक्यम् **द्वित्रि**
**भ्यां मूर्ध्नः** द्विमूर्धः त्रिमूर्धः नेतोत्तरपदा
द्बहुलम् सोमोनेतायेषांते सोमनेत्राः देवाः अर्य
मनेत्राः प्रायेणामृदक्षिणीनेत्राः कन्यार्थेदिक्कइस्वा
नः नेतानेतृशब्दः प्रथमाविभक्त्येकवचनम् प्र
थमान्त उत्तरपदं यस्य तस्मात् इतिक्रमात्संभवे
मृदक्षिणीनेत्री येषां ते मृदक्षिणीनेत्राः बहुलमितिवच
नात्कृतेनेतारोपि **अञ्नासिकायाः सं**
**ज्ञायां नसं चास्थूलात्** महानसः कु
म्भीनसः गोनसः इहनभवति स्थूलनासिकः ।
असंज्ञत्वात् गोस्त्रियोरुपसर्जनस्येतिह्रस्वः सं
ज्ञायामितिकिम् तुङ्गनासिकः **सुप्रात**
**सुश्वसुदिवशारिकुक्षचतुरश्रैणीप**
**दाजपदप्रोष्ठपदानिपात्यन्ते** शो
भनेप्रातःसुप्रातम् शोभनेश्वः सुश्वम् शोभने
दिवासुदिवम् शारिवत्कुक्षिर्यस्य सशारिकुक्षः च
तस्रः अश्रयोयस्य सचतुरश्रः **अश्र**
**स्यापूर्वस्यापि दृश्यते** अश्रःकटाक्षोपि
विराजन्त्यश्राः षडश्रमष्टाश्रमित्यस्यसेत् एण्याइवपादौ
यस्य सएणीपदः निपातनात्पद् अजस्येवपादौ
यस्य सः अजपदः प्रोष्ठौपादौ येषां ते प्रोष्ठपदाः भा
द्रपदा अपि **नित्यमसिच्प्रजामेधयोः**
नञ्दुस्सुभ्यः परयोः अप्रजाः दुष्प्रजाः सु

गार्ग्यः तुल्यः **नस्यतद्धिक्वचित्** नकारस्य
लोपो भवति स्वरादौ यकारादौ च प्रत्यये परे महां
श्चासौ राजा महाराजः राज्ञो भावः कर्म वा राज्यम्।
त्रयाणामह्नां समाहारः त्र्यहः क्वचिदिति वचनादि
ह न भवति दण्डिनां समूहो दाण्डिनम् **उव**
**र्णस्योत्वमापाद्यः** उवर्णस्यौत्वमापादनी
यः स्वरादौ यकारादौ च प्रत्यये परे भृगोरपत्यं भा
र्गवः कद्रुः अपत्यं काद्रवेयः बभ्रोरपत्यं बाभ्रव्यः
बभ्रूभ्यो हितं बभ्रव्यं वासः **यप्यकद्रुवा लु**
**प्यते** उवर्णः यप्रत्यये परे लुप्यते अकद्रु
रिः कद्रूशब्दं वर्जयित्वा मद्रबाहोरपत्यं माद्रबाह
यः जम्बा अपत्यं जाम्बेयः अकद्रुः इति किम् का
द्रवेयः **कार्यावावावौ दृष्टावौकौ**
**कारयोरपि** औकारौकारयोः यथासंख्यम् अ
व् आव् आदेशौ कर्त्तव्यौ स्वरादौ यकारादौ च प्रत्य
ये परे गोभ्यो हितं गव्यम् नावा तार्यं नाव्यम्
**वृद्धिरादौ सणे** णकारानुबन्धे प्रत्यये परे।
आदेः स्वरस्य वृद्धिर्भवति वासिष्ठः गार्ग्यः नाडाय
नः पौल्क्यम् **नय्वोः पदान्ताभ्यां वृद्धिराग**
**मः** पदान्ताभ्यां यकारवकाराभ्यां परस्य स्वर
स्य वृद्धिर्न भवति यकारवकारयोश्च वृद्धिरागमो भ
वति आच्च नयोः पूर्वमेव भवति विगतान्यङ्गानि यस्य
स व्यङ्गः व्यङ्गस्यापत्यं वैयङ्गिः शोभनाश्वाय स्वस

स्वस्वः लक्षणस्य पर्यन्तोऽवधिः व्याकरणं वेत्त्यधीते वा वैयाकरणाः तेषामुपचयः **इतिलक्ष्मीहेमोनामश्रकरणोतद्धितपादः षष्ठः ६**

**स्त्रियाम्** अधिकारोऽयम् यानितऊर्ध्वंप्रत्ययानवक्ष्यामि तेस्त्रियांवर्तमानाल्लिङ्गात्परेवेदितव्याः आपादपरिसमाप्तेरयमधिकारः **अजाद्यदन्तादाप्** अजादेर्गणात् अकारान्ताच्चलिङ्गात् स्त्रियांवर्तमानात् आप्प्रत्ययोभवति पकारःस्वरार्थः अजा एडका चटका अश्वा त्रिफला दंष्ट्रा क्रुञ्चा उष्णिहा बाला वत्सा कन्या ज्येष्ठा कनिष्ठा मध्यमा कोकिला अदन्तात् कृष्ण कृष्णा भिदा छिदा त्रपा देवदत्ता **ऋन्नेभ्यस्त्री** ऋदन्तेभ्योनान्तेभ्यश्च स्त्रियामीप्रत्ययोभवति कर्त्री हर्त्री दण्डिनी पद्मिनी **वनोरश्च** वनन्ताल्लिङ्गात् स्त्रियामीप्रत्ययोभवति रेफश्चान्तादेशः पीवन् पीवरी धीवन् धीवरी **नसंख्यायाः** संख्यायाऋन्नेभ्य इति स्त्रियांप्राप्तः ईप्रत्ययोनभवति तिस्रः चतस्रः पञ्च सप्त सापेक्षत्वे आपुनभवतिनलोपस्यासिद्धत्वात् स्वस्रादिभ्योनभवति स्वसा माता स्वसातिस्रश्चतस्रश्चननान्दादुहितातथा याता मातेति सप्तैते स्वस्रादयउदाहृताः **मनः** मनन्ताल्लिङ्गात्स्त्रियामीप्रत्ययोनभवति दामा दामानौ सीमा सीमानौ **अनश्चबहुव्रीहेः** अनन्ताद्बहुव्रीहेःस्त्रियामी

प्रत्ययोनभवति सुपर्वाणी सुपर्वाणौ सुशर्मा सुशर्मा-
णौ **नवोसुडा** नयोर्मनन्तस्यलिङ्गस्य अन-
न्तस्यचवहुव्रीहेः स्त्रियांडाप्रत्ययोभवति दामा दामे।
दामाः सीमा सीमे सीमाः सुशर्मा सुशर्मे सुशर्माः

**उदृकारानुबन्धान्नी** उकारानुबन्धा-
प्रत्ययान्तात् ऋकारानुबन्धप्रत्ययान्ताच्चस्त्रियामीप्र-
त्ययोभवति गोमती धनवती विदुषी पेचुषी भवती
अभिभवती पचन्ती दीव्यन्ती **पादोवा** पा-
च्छब्दान्तात् स्त्रियामीप्रत्ययोभवति विकल्पेन द्विपदी
द्विपात् **अनुपसर्जनात्** अधिकारोयमा
स धातित ऊर्ध्वंप्रत्ययानत्तुक्रमिष्यामः अनुपसर्जना।
प्रधानादेवतीभवन्तीतिवेदितव्यम् वहवोब्राह्मणाय-
स्यांसावहुब्राह्मणानगरी अत्रङीनास्तीति अप्रधानात्।
युवन् शब्दान्नभवतीतिप्रत्ययः **नारी** अयं
शब्दोनिपात्यते अत्रनृशब्दस्यईप्रत्ययेपरेवृद्धिर्निपा-
त्यते नारी **यूनस्तिः** युवन्शब्दात्तिप्रत्य-
योभवति युवतिः ऋन्नेभ्यस्त्रीतिर्ईकारःप्राप्तः नस्य
तकारश्चित् इतिनलोपः **अणेयेकात्** अ-
णन्तात् एयणन्तात् इकणन्ताच्चलिङ्गात् ईप्रत्य-
योभवति वासिष्ठी कुम्भकारी कर्मण्यण् आत्रेयी
आक्षिकी अनुपसर्जनादित्येव बहुवासिष्ठा अति-
कुम्भकारा **ण्यात्** ण्यप्रत्ययान्तात् स्त्री-
यामीप्रत्ययोभवति गार्गी यस्यापत्यस्येतियलोपः अ

अनुपसर्जनादित्येव प्रियगार्ग्या **यञश्चायनञ्चागमः** यञन्तात्स्त्रियामीप्रत्यये परे आयनञ्च आगमो भवति आयनमिति वचनाद्विकल्पेन गार्ग्यायणी । गार्गी वात्स्यायनी वात्सी यस्यापत्यस्येति यलोपः **कौरव्यासुरिमाण्डूकात्** कौरव्यासुरिमाण्डूकशब्देभ्यः ईप्रत्यये परे आयनञ्च आगमो भवति। कौरव्यायणी आसुरायणी माण्डूकायनी **लोहितादिकतन्ततः** लोहितादिभ्यः शब्देभ्यः कतपर्यन्तेभ्यः ईप्रत्यये परे आयनञ्च आगमो भवति लोहितस्यापत्यं स्त्री लौहित्यायनी कत कात्यायिनी **आवट्यादाप्** आवट्यशब्दात् आप् भवति अवटस्यापत्यं स्त्री आवट्या **वतण्डाच्च** वातण्ड्यशब्दस्य ईप्रत्ययो वतण्डादेशश्च निपात्यते वतण्डस्यापत्यं स्त्री वतण्डी **वयसि प्रथमे** प्रथमे वयसि वर्तमानात् शब्दात् स्त्रियामीप्रत्ययो भवति कुमारी किशोरी वधूटी चिरण्टी **द्विगोः** अदन्तात् परात् द्विगोः स्त्रियामीप्रत्ययो भवति पञ्चमूली दशग्रामी समाहारे द्विगोरयंविधिः **षट्टो अनुबन्धान्नी** षकारानुबन्धप्रत्ययान्तात् टकारानुबन्धप्रत्ययान्ताच्च स्त्रियामीप्रत्ययो भवति नर्तकी खनकी नृती गात्रविक्षेपे खनु अवधारणे नर्तनं शिल्पमस्याः खननं शिल्पमस्या इति शिल्पिनि ष्वु षकार इदर्थः युवुणामनाकान्ता इत्यकादेशः ।

नामिनश्चोपधायाइतिवृत्तः अनेनईकारः टकारानुब न्धात् कुरुचरी मद्रचरी चरगत्यर्थः कुरुषुचरति। मद्रेषुचरति चरेष्टः टकारइदार्थः अनेनईकारः

**गौरादेः** गौरादेर्गणात्स्त्रियामीप्रत्ययोभ वति गौरी मत्सी मत्स्यस्ययोङ्यामितियलोपः ना दी मही नर्तकी **बहुव्रीहेरूधसोनच** ऊ धस् शब्दान्तात् बहुव्रीहेः ईप्रत्ययोभवति नकार श्चान्तादेशः कुण्डमिवऊधोयस्याः साकुण्डोध्नी एवं घटोध्नी सकारस्यनकारेकृते अवमसंयोगादितिअ कारलोपः बहुव्रीहाविति किम् प्राप्तऊधः प्राप्तोधाः न स्त्रकषोपम् अन्तसन्नेतिदीर्घः **वासंयोगोपा धात्स्वाङ्गात्** यत्स्वाङ्गमसंयोगोपधंयत्स्योप धायांसंयोगोनास्तितस्मात् ईप्रत्ययोवाभवति च न्द्रइवमुखंयस्याः साचन्द्रमुखी चन्द्रमुखा सुकेशी सुके शा चारुस्तनी चारुस्तना असंयोगोपधादितिकिम् बहुयना **अनस्याल्लोपिकर्णिनः** अन न्ताद्बहुव्रीहेरल्लोपिनः यस्याः वमसंयोगादित्यका रलोपोऽस्तितस्मात्कर्णाच्छब्दान्तात्स्त्रियामीप्रत्ययोवा भवति अनश्चबहुव्रीहेः नवोस्तुणाइतिनिषेधपक्षे प्र योमित्यप्राप्तौ पक्षेतावपिभवतः बहवोराजानोय स्यांसाबहुराज्ञी बहुराज्ञ्यौ बहुराज्ञ्यः बहुराजा बहुरा जानौ बहुराजानः बहुराजा बहुराजे बहुराजाः द्वि नाम्नी द्विनाम्न्यौ द्विनाम्न्यः द्विनामा द्विनामानौ द्वि।

नामानः द्विनाम्नी द्विनाम्ने द्विनामानः कर्णान्तात् लम्बकर्णी लम्बकर्णा अकोपधत्वात्किम् सुपर्वी सुपर्वाणौ सुपर्वाणः सुपर्वा सुपर्वे सुपर्वाः **नासिकोदरकर्णाङ्गजङ्घादन्तौष्ठशृङ्गतः** नासिक उदर कर्ण अङ्ग जङ्घ दन्त ओष्ठ शृङ्ग इत्येतदन्तात्स्वाङ्गात् स्त्रियामीप्रत्ययो भवति तुङ्गनासिकी तुङ्गनासिका तनूदरी तनूदरा कम्बुकण्ठी कम्बुकण्ठा स्वल्पाङ्गी स्वल्पाङ्गा स्थूलजङ्घी स्थूलजङ्घा सितदन्ती सितदन्ता बिम्बोष्ठी बिम्बोष्ठा तीक्ष्णशृङ्गी तीक्ष्णशृङ्गा **सविद्यमाननञ्पूर्वात्** सविद्यमाननञ् एतत्पूर्वात्स्वाङ्गादीप्रत्ययो न भवति सहकेशेन वर्तते सकेशा विद्यमानकेशा न विद्यन्ते केशा यस्याः सा अकेशा एवं सनासिका विद्यमानकेशा अकारादाइत्यादि **नक्रोडादिबहुस्वरात्** क्रोडाद्यन्ताद्बहुस्वरात्स्वाङ्गादीप्रत्ययो न भवति रम्यक्रोडा शोभनखुरा घनशफा बहुस्वरात् पृथुजघना शशिवदना **अन्तर्वतो नुग्गर्भिण्याम्** अन्तर्वत् शब्दात् गर्भिण्यां स्त्रियामीप्रत्यये परे नुगागमो भवति अन्तर्वत्नी गर्भिणी गर्भिण्यामिति किम् अन्तर्विद्यतेऽस्याः शालायाम् अन्तर्वती शाला **पतिवज्जीवभर्तरि** पतिवत्शब्दात् जीवभर्तृकायां स्त्रियां वर्तमानात् ईप्रत्यये परे नुगागमो भवति पतिवत्नी देवदत्ता जीवभर्तरीति किम् पतिमती मथुरा

**पत्युर्नश्च** पतिशब्दात्स्त्रियामीङ्प्रत्ययो भवति नका
रश्चान्तादेशः पत्नी ब्राह्मणस्याग्निर्यवैसपत्नी भार्योच्य
ते अन्यत्र ग्रामस्य पतिरियं स्त्री **समानादेः**
समानादेर्गणात्परस्य पतिशब्दस्य ईप्रत्ययो भवति अ
न्त्यस्य च नकारादेशः समानः पतिर्यस्याः सा सपत्नी इ
हचार्हन्तेषु समानस्य स इति योगविभागात्समानं
स्य सभावः समान आदि वीरपत्नी एकपत्नी दासपत्नी इति समाना
दिगणः **वान्यपूर्वोपसर्जनात्** समा
नादेर्गणादन्यः शब्दः पूर्वो यस्मात् अप्रधानात् ईप्र
त्ययो नकारश्चान्तादेशो वा भवति वृद्धः पतिर्यस्याः
सा वृद्धपत्नी वृद्धपतिर्वा एवं स्थूलपत्नी स्थूलपति
र्वा उपसर्जनादिति किम् ग्रामस्य पतिरियम्
**कामुकान्मैथुनेच्छायाम्** कामुकशब्दा
त् मैथुनेच्छायां गम्यमानायां स्त्रियामीप्रत्ययो भव
ति कामुकी मैथुनमिच्छन्ती अन्यत्र कामुकायन्यत्कि
मपि वाञ्छन्ती **नागात्स्थौल्ये** नाग
शब्दात्स्थौल्ये गम्यमाने स्त्रियामीप्रत्ययो भवति नागी
स्थूलोच्यते स्थौल्ये इति किम् नागा **अकृते
स्थलात्** स्थलशब्दादीप्रत्ययो भवति अकृते
गम्यमाने वनस्थली अकृते इति किम् स्थला यादे
वनार्चनार्थं क्रियते सोच्यते **गोणादावपने**
गोणशब्दादावपनेऽर्थे ईप्रत्ययो भवति गोणी
**पिण्डादन्ने** पिण्डशब्दादन्नेऽर्थे ईप्रत्ययो

भवति पिण्डी अन्ने इति किम् पिण्डा अमत्रे कुण्डतः कुण्डतः कुण्डशब्दात् ईप्रत्ययो भवति अमत्रेऽर्थे अमत्रंपात्रम् कुण्डी अमत्रे इति किम् कुण्डा घटाच्छिल्पिकृते घटशब्दात् ईप्रत्ययो भवति शिल्पी कुम्भकारादिः तेन कृते भाण्डे घटी शिल्पिकृते इति किम् करिघटा कुम्भात् कुम्भशब्दात् शिल्पिकृतेऽर्थे स्त्रियामीप्रत्ययो भवति कुम्भी असितादेश्च वर्णतः

वर्णतो वर्णवाचिनो लिङ्गात् असितादेः सितादिवर्जितात् स्त्रियामीप्रत्ययो भवति शबली कल्माषी पिशङ्गी असितादेरिति किम् सिता शुक्ला पीता श्वेता सितशुक्लपीतकृष्णश्यामकपिलरक्तधवलधूसरपिशङ्गपिङ्गलकडारकर्बुरधूम्र इत्यादिः सितादिः तोपधात्तो नकारश्च वा तकारोपधाद्वर्णवाचिनः स्त्रियामीप्रत्ययो वा भवति ईकारपरे तकारस्य नकारश्च वा एनी एता हरिणी हरिता रोहिणी रोहिता वर्णात् इति किम् प्रकृता तोपधादिति किम् श्यामा उदन्ताद्गुणवाचिनः गुणवाचिनः विशेषणप्रतिपादकात् उकारान्तात् लिङ्गात् स्त्रियामीप्रत्ययो वा भवति पट्वी पटुः मृद्वी मृदुः उदन्तादिति किम् आखुरियम् बह्वादिभ्यः बह्वित्यादिशब्देभ्यः स्त्रियामीप्रत्ययो वा भवति बह्वी बहुः कल्याणी कल्याणा बहु उदार कल्याण पुराण कृपाण विशाल

इतिवह्वादयः   भुवोनित्यम्   भूशब्दात्स्त्रि
यामीप्रत्ययोनित्यंभवति विभ्वी प्रभ्वी भूशब्दग्रहणा
त्किम् स्वयम्भूरियम्   सख्यशिश्वोश्च
सखिअशिशुशब्दाभ्यांस्त्रियामीप्रत्ययोभवति
सखी नविद्यते शिशुर्यस्याः साअशिश्वी   पुंयो
गात्तेनचेदाख्या   पुंयोगात्तत्कृतसंबन्धाद्धे
तोः यःशब्दःस्त्रियांवर्तते तस्माद्दीप्रत्ययोभवति तेन
चेदाख्यातेनशब्देनयदिपुंसःआख्याअभिधानंभवति।
गणकस्यस्त्रीगणकी पाटितस्यस्त्रीपाटिती पुंयोगा
दितिकिम् देवदत्ता तेनचेदाख्याइतिकिम् प्रसूता
क्रीतात्करणपूर्वतः   करणंपूर्वंयस्मा
त्क्रीतशब्दात् तस्माद्दीप्रत्ययोभवति वस्त्रेणक्रीता
वस्त्रक्रीती धनक्रीती करणपूर्वादितिकिम् स्वयं।
क्रीता स्वयंक्रीता   पूतक्रतुमनोरैश्च
पूतक्रतुशब्दात् मनुशब्दाच्चस्त्रियांईप्रत्ययोभवति अ
न्त्यस्यचऐकारादेशः पुंयोगेगम्यमाने पूतक्रतोःस्त्री पूत
क्रतायी मनोःस्त्रीमनायी पुंयोगइतिकिम् पूताःक्रत
वोययासापूतक्रतुरियम् मनुरियम्   कु
सिताग्निवृषाकपेः ॥   कुसिता
ग्निवृषाकपिशब्देभ्यः स्त्रियांईप्रत्ययोभवति ऐकार
श्चान्तादेशः पुंयोगेगम्यमाने कुसितस्त्री कुसितायी
अग्नेःस्त्री अग्नायी वृषाकपायी वृषाकप्याग्नि कुसित।
कुसिदात्शब्दात् इतिसूत्रकारःश्रीपाणिनिः   उ

ढितः पुत्रो वा ब्रह्मसूतभोजोग्रराजतः ब्र
ह्मन् सूतभोजउग्रराजन् इत्येतेभ्यः परस्मात् ऊढित
शब्दात् वा ईप्रत्ययो भवति ऊढितशब्दस्य च पक्षे पुत्रादे
शः ब्रह्मपुत्री ब्रह्मऊढिता सूतपुत्री सूतऊढिता भोज
पुत्री भोजऊढिता उग्रपुत्री उग्रऊढिता राजपुत्री राजऊ
ढिता **जातेरयोपधात्स्त्रीतः** जातिवा
चियल्लिङ्गं अयकारोपधं स्त्रियामेव यत्न वर्तते तस्मा
दीप्रत्ययो भवति कुक्कुटी मयूरी ब्राह्मणी चण्डाली
नाडायनी कठी जातेरिति किम् पाचिका अयोपधा
दिति किम् क्षत्रिया अस्त्रीत इति किम् बलाका
**पाकाद्यन्ताल्लिङ्गाच्च** जातिवाचि यल्लिङ्गं
पाकाद्यन्तं तस्मादीप्रत्ययो भवति ओदनपाकी श
ङ्कुकर्णी मालपर्णी शङ्खपुष्पी औषधिजातिविषयम्
पाक कर्ण पर्ण पुष्प फल मूल इति पाकादयः
**इञः** इञ्प्रत्ययान्तादीप्रत्ययो भवति दक्षस्या
पत्यं स्त्री दाक्षी प्लाक्षी **मनुष्यजातेरिः**
मनुष्यजातिवाचिनः ॥ इकारान्ताल्लिङ्गात् ॥ ईप्र
त्ययो भवति ॥ ॥ अवन्ती कुन्ती मनुष्यजाते
रिति किम् तित्तिरिः **ऊङुतः** उकारान्ता
न्मनुष्यजातिवाचिनो लिङ्गात् ऊङ्प्रत्ययो भवति
कारः [illegible] कुरूः ब्रह्म
**पङ्गुकद्रुतः** पङ्गुकद्रुशब्दाभ्यामि
ऊङ् भवति **सफलल**





**मादेरूरोः** सफलक्षणावाम इत्येतदादेः ऊरु
शब्दादूङ् भवति सफोरूः लक्षणोरूः वामोरूः
**औपम्यसंहितात्** औपम्येन उपमया संहिता
त् संयुक्तात् ऊरुशब्दात् स्त्रियामूङ् भवति करभ
इव ऊरू यस्याः साकरभोरूः कदलीस्तम्भोरूः म
णिबन्धादाकनिष्ठं करस्य करभो बहिः **बाहु**
**न्तोऽसंज्ञायाम्** बाहुशब्दान्तात् स्त्रिया
मूङ् भवति संज्ञायां विषये मद्रबाहूः भद्रबाहूः सं
ज्ञायामितिकिम् वृत्तबाहुरियम् **वलोपः श्वशुरस्य च**
उश्च अश्च तौ वयोर्लोपः श्वशुरशब्दात् ऊङ् प्रत्ययो
भवति अन्त्यस्य अकारस्य उकारस्य च लोपो भवति श्व
श्रूरस्ती श्वश्रूः **इति लघुसूत्रौ नाम स**
**प्रकरणोस्त्रीप्रत्ययपादः सप्तमः ७ वक्ष्ये**
**क्ष्ये समासम् ॥ सन्धिनामसमासाख्य**
**नहितस्सर्वत्रक्ष्यामिति ॥ शुभम् ॐ**